# श्रीशिवोपनिषत्

कैलासशिखरासीनमशेषामरपूजितम् ।
कालघ्नं श्रीमहाकालमीश्वरं ज्ञानपारगम् ॥ १-१॥

सम्पूज्य विधिवद्भक्त्या ऋष्यात्रेयः सुसंयतः ।
सर्वभूतहितार्थाय पप्रच्छेदं महामुनिः ॥ १-२॥

ज्ञानयोगं न विन्दन्ति ये नरा मन्दबुद्धयः ।
ते मुच्यन्ते कथं घोराद्भगवन्भवसागरात् ॥ १-३॥

एवं पृष्टः प्रसन्नात्मा ऋष्यात्रेयेण धीमता ।
मन्दबुद्धिविमुक्त्यर्थं महाकालः प्रभाषते ॥ १-४॥

महादेव उवाच
पुरा रुद्रेण गदिताः शिवधर्माः सनातनाः ।
देव्याः सर्वगणानां च संक्षेपाद्ग्रन्थकोटिभिः ॥ १-५॥

आयुः प्रज्ञां तथा शक्तिं प्रसमीक्ष्य नृणामिह ।
तापत्रयप्रपीडां च भोगतृष्णाविमोहिनीम् ॥ १-६॥

ते धर्माः स्कन्दनन्दिभ्यामन्यैश्च मुनिसत्तमैः ।
सारमादाय निर्दिष्टाः सम्यक्प्रकरणान्तरैः ॥ १-७॥

सारादपि महासारं शिवोपनिषदं परम् ।
अल्पग्रन्थं महार्थं च प्रवक्ष्यामि जगद्धितम् ॥ १-८॥

शिवः शिव इमे शान्त- नाम चाद्यं मुहुर्मुहुः ।
उच्चारयन्ति तद्भक्त्या ते शिवा नात्र संशयः ॥ १-९॥

अशिवाः पाशसंयुक्ताः पशवः सर्वचेतनाः ।
यस्माद्विलक्षणास्तेभ्यस्तस्मादीशः शिवः स्मृतः ॥ १-१०॥

गुणो बुद्धिरहंकारस्तन्मात्राणीन्द्रियानि च ।
भूतानि च चतुर्विंशदिति पाशाः प्रकीर्तिताः ॥ १-११॥

पञ्चविंशकमज्ञानं सहजं सर्वदेहिनाम् ।
पाशाजालस्य तन्मूलं प्रकृतिः कारणाय नः ॥ १-१२॥

सत्यज्ञाने निबध्यन्ते पुरुषाः पाशबन्धनैः ।
मद्भावाच्च विमुच्यन्ते ज्ञानिनः पाशपञ्जरात् ॥ १-१३॥

षड्विंशकश्च पुरुषः पशुरज्ञः शिवागमे ।
सप्तविंश इति प्रोक्तः शिवः सर्वजगत्पतिः ॥ १-१४॥

यस्माच्छिवः सुसम्पूर्णः सर्वज्ञः सर्वगः प्रभुः ।
तस्मात्स पाशहरितः स विशुद्धः स्वभावतः ॥ १-१५॥

पशुपाशपरः शान्तः परमज्ञानदेशिकः ।
शिवः शिवाय भूतानां तं विज्ञाय विमुच्यते ॥ १-१६॥

एतदेव परं ज्ञानं शिव इत्यक्षरद्वयम् ।
विचाराद्याति विस्तारं तैलबिन्दुरिवाम्भसि ॥ १-१७॥

सकृदुच्चारितं येन शिव इत्यक्षरद्वयम् ।
बद्धः परिकरस्तेन मोक्षोपगमनं प्रति ॥ १-१८॥

द्व्यक्षरः शिवमन्त्रो ऽयं शिवोपनिषदि स्मृतः ।
एकाक्षरः पुनश्चायमोमित्येवं व्यवस्थितः ॥ १-१९॥

नामसंकीर्तणादेव शिवस्याशेषपातकैः ।
यतः प्रमुच्यते क्षिप्रं मन्त्रो ऽयं द्व्यक्षरः परः ॥ १-२०॥

यः शिवं शिवमित्येवं द्व्यक्षरं मन्त्रमभ्यसेत् ।
एकाक्षरं वा सततं स याति परमं पदम् ॥ १-२१॥

मित्रस्वजनबन्धूनां कुर्यान्नाम शिवात्मकम् ।
अपि तत्कीर्तनाद्याति पापमुक्तः शिवं पुरम् ॥ १-२२॥

विज्ञेयः स शिवः शान्तो नरस्तद्भावभावितः ।
आस्ते सदा निरुद्विग्नः स देहान्ते विमुच्यते ॥ १-२३॥

हृद्यन्तःकरणं ज्ञेयं शिवस्य आयतनं परम् ।
हृत्पद्मं वेदिका तत्र लिङ्गमोंकारमिष्यते ॥ १-२४॥

पुरुषः स्थापको ज्ञेयः सत्यं संमार्जनं स्मृतम् ।

अहिंसा गोमयं प्रोक्तं शान्तिश्च सलिलं परम् ॥ १-२५॥

कुर्यात्संमार्जनं प्राज्ञो वैराग्यं चन्दनं स्मृतम् ।
पूजयेद्ध्यानयोगेन संतोषैः कुसुमैः सितैः ॥ १-२६॥

धूपश्च गुग्गुलुर्देयः प्राणायामसमुद्भवः ।
प्रत्याहारश्च नैवेद्यमस्तेयं च प्रदक्षिणम् ॥ १-२७॥

इति दिव्योपचारैश्च सम्पूज्य परमं शिवम् ।
जपेद्ध्यायेच्च मुक्त्यर्थं सर्वसङ्गविवर्जितः ॥ १-२८॥

ज्ञानयोगविनिर्मुक्तः कर्मयोगसमावृतः ।
मृतः शिवपुरं गच्छेत्स तेन शिवकर्मणा ॥ १-२९॥

तत्र भुक्त्वा महाभोगान्प्रलये सर्वदेहिनाम् ।
शिवधर्माच्छिवज्ञानं प्राप्य मुक्तिमवाप्नुयात् ॥ १-३०॥

ज्ञानयोगेन मुच्यन्ते देहपातादनन्तरम् ।
भोगान्भुक्त्वा च मुच्यन्ते प्रलये कर्मयोगिनः ॥ १-३१॥

तस्माज्ज्ञानविदो योगात्तथाज्ञाः कर्मयोगिनः ।
सर्व एव विमुच्यन्ते ये नराः शिवमाश्रिताः ॥ १-३२॥

स भोगः शिवविद्यार्थं येषां कर्मास्ति निर्मलम् ।
ते भोगान्प्राप्य मुच्यन्ते प्रलये शिवविद्यया ॥ १-३३॥

विद्या संकीर्तनीया हि येषां कर्म न विद्यते ।
ते चावर्त्य विमुच्यन्ते यावत्कर्म न तद्भवेत् ॥ १-३४॥

शिवज्ञानविदं तस्मात्पूजयेद्विभवैर्गुरुम् ।
विद्यादानं च कुर्वीत भोगमोक्षजिगीषया ॥ १-३५॥

शिवयोगी शिवज्ञानी शिवजापी तपोऽधिकः ।
क्रमशः कर्मयोगी च पञ्चैते मुक्तिभाजनाः ॥ १-३६॥

कर्मयोगस्य यन्मूलं तद्वक्ष्यामि समासतः ।
लिङ्गमायतनं चेति तत्र कर्म प्रवर्तते ॥ १-३७॥

॥ इति शिवोपनिषदि मुक्तिनिर्देशाध्यायः प्रथमः ॥

अथ पूर्वस्थितो लिङ्गे गर्भः स त्रिगुणो भवेत् ।
गर्भाद्वापि विभागेन स्थाप्य लिङ्गं शिवालये ॥ २-१॥

यावल्लिङ्गस्य दैर्घ्यं स्यात्तावद्वेद्याश्च विस्तरः ।
लिङ्गतृतीयभागेन भवेद्वेद्याः समुच्छ्रयः ॥ २-२॥

भागमेकं न्यसेद्भूमौ द्वितीयं वेदिमध्यतः ।
तृतीयभागे पूजा स्वादिति लिङ्गं त्रिधा स्थितम् ॥ २-३॥

भूमिस्थं चतुरश्रं स्वादष्टाश्रं वेदिमध्यतः ।
पूजार्थं वर्तुलं कार्यं दैर्घ्यात्त्रिगुणविस्तरम् ॥ २-४॥

अधोभागे स्थितः स्कन्दः स्थिता देवी च मध्यतः ।
ऊर्ध्वं रुद्रः क्रमाद्वापि ब्रह्मविष्णुमहेश्वराः ॥ २-५॥

एत एव त्रयो लोका एत एव त्रयो गुणाः ।
एत एव त्रयो वेदा एतच्चान्यत्स्थितं त्रिधा ॥ २-६॥

नवहस्तः स्मृतो ज्येष्ठः षड्ढस्तश्चापि मध्यमः ।
विद्यात्कनीयस्त्रैहस्तं लिङ्गमानमिदं स्मृतम् ॥ २-७॥

गर्भस्यानतः प्रविस्तारस्तदूनश्च न शस्यते ।
गर्भस्यानतः प्रविस्ताराद्तदुपर्यपि संस्थितम् ॥ २-८॥

प्रासादं कल्पयेच्छ्रीमान्विभजेत त्रिधा पुनः ।
भाग एको भवेज्जङ्घा द्वौ भागौ मञ्जरी स्मृता ॥ २-९॥

मञ्जर्या अर्धभागस्थं शुकनासं प्रकल्पयेत् ।
गर्भादर्धेन विस्तारमायामं च सुशोभनम् ॥ २-१०॥

गर्भाद्वापि त्रिभागेन शुकनासं प्रकल्पयेत् ।
गर्भादर्धेन विस्तीर्णा गर्भाच्च द्विगुणायता ॥ २-११॥

जङ्घाभिश्च भवेत्कार्या मञ्जर्यङ्गुलराशिना ।

प्रासादार्धेन विज्ञेयो मण्डपस्तस्य वामतः ॥ २-१२॥

मण्डपात्पादविस्तीर्णा जगती तावदुच्छ्रिता ।
प्रासादस्य प्रमाणेन जगत्या सार्धमङ्गणम् ॥ २-१३॥

प्राकारं तत्समन्ताच्च गुपुरादालभूषितम् ।
प्राकारान्तः स्थितं कार्यं वृषस्थानं समुच्छ्रितम् ॥ २-१४॥

नन्दीश्वरमहाकालौ द्वारशाखाव्यवस्थितौ ।
प्राकाराद्दक्षिणे कार्यं सर्वोपकरणान्वितम् ॥ २-१५॥

पञ्चभौमं त्रिभौमं वा योगीन्द्रावसथं महत् ।
प्राकारगुप्तं तत्कार्यं मैत्रस्थानसमन्वितम् ॥ २-१६॥

स्थानाद्दशसमायुक्तं भव्यवृक्षजलान्वितम् ।
तन्महानसमाग्नेय्यां पूर्वतः सत्त्रमण्डपम् ॥ २-१७॥

स्थानं चण्डेशमैशान्यां पुष्पारामं तथोत्तरम् ।
कोष्ठागारं च वायव्यां वारुण्यां वरुणालयम् ॥ २-१८॥

शमीन्धनकुशस्थानमायुधानां च नैरृतम् ।
सर्वलोकोपकाराय नगरस्थं प्रकल्पयेत् ॥ २-१९॥

श्रीमदायतनं शम्भोर्योगिनां विजने वने ।
शिवस्यायतने यावत्समेताः परमाणवः ॥ २-२०॥

मन्वन्तराणि तावन्ति कर्तुर्भोगाः शिवे पुरे ।
महाप्रतिमलिङ्गानि महान्त्यायतनानि च ॥ २-२१॥

कृत्वाप्नोति महाभोगानन्ते मुक्तिं च शाश्वतीम् ।
लिङ्गप्रतिष्ठां कुर्वीत यदा तल्लक्षणं कृती ॥ २-२२॥

पञ्चगव्येन संशोध्य पूजयित्वाधिवासयेत् ।
पालाशोदुम्बराश्वत्थ- पृषदाज्यतिलैर्यवैः ॥ २-२३॥

अग्निकार्यं प्रकुर्वीत दद्यात्पूर्णाहुतित्रयम् ।
शिवस्याष्टशतं हुत्वा लिङ्गमूलं स्पृशेद्बुधः ॥ २-२४॥

एवं मध्ये ऽवसाने तन्मूर्तिमन्त्रैश्च मूर्तिषु ।
अष्टौ मूर्तीश्वराः कार्याः नवमः स्थापकः स्मृतः ॥ २-२५॥

प्रातः संस्थापयेल्लिङ्गं मन्त्रैस्तु नवभिः क्रमात् ।
महास्नापनपूजां च स्थाप्य लिङ्गं प्रपूजयेत् ॥ २-२६॥

गुरोर्मूर्तिधराणां च दद्यादुत्तमदक्षिणाम् ।
यतीनां च समस्तानां दद्यान्मध्यमदक्षिणाम् ॥ २-२७॥

दीनान्धकृपणेभ्यश्च सर्वासामुपकल्पयेत् ।
सर्वभक्ष्यान्नपानाद्यैरनिषिद्धं च भोजनम् ॥ २-२८॥

कल्पयेदागतानां च भूतेभ्यश्च बलिं हरेत् ।
रात्रौ मातृगणानां च बलिं दद्याद्विशेषतः ॥ २-२९॥

एवं यः स्थापयेल्लिङ्गं तस्य पुण्यफलं शृणु ।
कुलत्रिंशकमुद्धृत्य भृत्यैश्च परिवारितः ॥ २-३०॥

कलत्रपुत्रमित्राद्यैः सहितः सर्वबान्धवैः ।
विमुच्य पापकलिलं शिवलोकं व्रजेन्नरः ।
तत्र भुक्त्वा महाभोगान्प्रलये मुक्तिमाप्नुयात् ॥ २-३१॥

॥ इति शिवोपनिषदि लिङ्गायतनाध्यायो द्वितीयः ॥

अथान्यैरल्पवित्तैश्च नृपैश्च शिवभावितैः ।
शक्तितः स्वाश्रमे कार्यं शिवशान्तिगृहद्वयम् ॥ ३-१॥

गृहस्येशानदिग्भागे कार्यमुत्तरतो ऽपि वा ।
खात्वा भूमिं समुद्धृत्य शल्यानाकोट्य यत्नतः ॥ ३-२॥

शिवदेवगृहं कार्यमष्टहस्तप्रमाणतः ।
दक्षिणोत्तरदिग्भागे किंचिच्दीर्घं प्रकल्पयेत् ॥ ३-३॥

हस्तमात्रप्रमाणं च दृढपट्टचतुष्टयम् ।
चतुष्कोणेषु संयोज्यमर्घ्यपात्रादिसंश्रयम् ॥ ३-४॥

गर्भमध्ये प्रकुर्वीत शिववेदिं सुशोभनाम् ।
उदगर्वाक्चिच्छ्रतां(?) किंचिच्चतुःशीर्षकसंयुताम् ॥ ३-५॥

त्रिहस्तायामविस्ताराम्षोडशाङ्गुलमुच्छ्रिताम् ।
तच्छीर्षाणीव हस्तार्धमायामाद्विस्तरेण च ॥ ३-६॥

शिवस्थण्डिलमित्येतच्चतुर्हस्तं समं शिरः ।
मूर्तिनैवेद्यदीपानां विन्यासार्थं प्रकल्पयेत् ॥ ३-७॥

शैवलिङ्गेन कार्यं स्यात्कार्यं मणिजपार्थिवैः ।
स्थण्डिलार्धे च कुर्वन्ति वेदिमन्यां सवर्तुलाम् ॥ ३-८॥

षोडशाङ्गुलमुत्सेधां विस्तीर्णां द्विगुणेन च ।
गृहे न स्थापयेच्छैलं लिङ्गं मणिजमर्चयेत् ॥ ३-९॥

त्रिसंध्यं पार्थिवं वापि कुर्यादन्यद्दिनेदिने ।
सर्वेषामेव वर्णानां स्फाटिकं सर्वकामदम् ॥ ३-१०॥

सर्वदोषविनिर्मुक्तमन्यथा दोषमावहेत् ।
आयुष्मान्बलवाञ्श्रीमान्पुत्रवान्धनवान्सुखी ॥ ३-११॥

वरमिष्टं च लभते लिङ्गं पार्थिवमर्चयन् ।
तस्माद्धि पार्थिवं लिङ्गं ज्ञेयं सर्वार्थसाधकम् ॥ ३-१२॥

निर्दोषं सुलभं चैव पूजयेत्सततं बुधः ।
यथा यथा महालिङ्गं पूजा श्रद्धा यथा यथा ॥ ३-१३॥

तथा तथा महत्पुण्यं विज्ञेयमनुरूपतः ।
प्रतिमालिङ्गवेदीषु यावन्तः परमाणवः ।
तावत्कल्पान्महाभोगस्तत्कर्तास्ते शिवे पुरे ॥ ३-१४॥

॥ इति शिवोपनिषदि शिवगृहाध्यायस्तृतीयः ॥

अथैकभिन्नाविच्छिन्नं पुरतः शान्तिमण्डपम् ।
पूर्वापराष्टहस्तं स्याद्द्वादशोत्तरदक्षिणे ॥ ४-१॥

तद्द्वारभित्तिसंबद्धं कपिच्छुकसमावृतम् ।
पटद्वयं भवेत्स्थाप्य सुवाद्यावारहेतुना ॥ ४-२॥

द्वारं त्रिशाखं विज्ञेयं नवत्यङ्गुलमुच्छ्रितम् ।
तदर्धेन च विस्तीर्णं सत्कवाटं शिवालये ॥ ४-३॥

दीर्घं पञ्चनवत्या च पञ्चशाखासुशोभितम् ।
सत्कवाटद्वयोपेतं श्रीमद्वाहनमण्टपम् ॥ ४-४॥

द्वारं पश्चान्मुखं ज्ञेयमशेषार्थप्रसाधकम् ।
अभावे प्राङ्मुखं कार्यमुदग्दक्षिणतो न च ॥ ४-५॥

गवाक्षकद्वयं कार्यमपिधानं सुशोभनम् ।
धूमनिर्गमनार्थाय दक्षिणोत्तरकुड्ययोः ॥ ४-६॥

आग्नेयभागात्परितः कार्या जालगवाक्षकाः ।
ऊर्ध्वस्तूपिकया युक्ता ईषच्छिद्रपिधानया ॥ ४-७॥

शिवाग्निहोत्रकुण्डं च वृत्तं हस्तप्रमाणतः ।
चतुरश्रवेदि(kA) श्रीमन्मेखलात्रयभूषितम् ॥ ४-८॥

कुड्यं द्विहस्तविस्तीऋणं पञ्चहस्तसमुच्छ्रितम् ।
शिवाग्निहोत्रशरणं कर्तव्यमतिशोभनम् ॥ ४-९॥

जगतीस्तम्भपट्टाद्यं सप्तसंख्यं च कल्पयेत् ।
बन्धयोगविनिर्मुक्तं तुल्यस्थानपदान्तरम् ॥ ४-१०॥

ऐष्टकं कल्पयेद्यत्नाच्छिवाग्न्यायतनं महत् ।
चतुःप्रेगीवकोपेतम्(?) एकप्रेगीवकेन वा(?) ॥ ४-११॥

सुधाप्रलिप्तं कर्तव्यं पञ्चाण्डकबिभूषितम् ।
शिवाग्निहोत्रशरणं चतुरण्डकसंयुतम् ॥ ४-१२॥

बहिस्तदेव जगती त्रिहस्ता वा सुकुट्टिमा ।
तावदेव च विस्तीर्णा मेखलादिविभूषिता ॥ ४-१३॥

कर्तव्या चात्र जगती तस्याश्चाधः समन्ततः ।
द्विहस्तमात्रविस्तीर्णा तदर्धार्धसमुच्छ्रिता ॥ ४-१४॥

अन्या वृत्ता प्रकर्तव्या रुद्रवेदी सुशोभना ।
दशहस्तप्रमाणा च चतुरङ्गुलमुच्छ्रिता ॥ ४-१५॥

रुद्रमातृगणानां च दिक्पतीनां च सर्वदा ।
सर्वाग्रपाकसंयुक्तं तासु नित्यबलिं हरेत् ॥ ४-१६॥

वेद्यन्या सर्वभूतानां बहिः कार्या द्विहस्तिका ।
वृषस्थानं च कर्तव्यं शिवालोकनसंमुखम् ॥ ४-१७॥

अग्रार्षसवितुर्व्योम वृषः कार्यश्च पश्चिमे ।
व्योम्नश्चाधस्त्रिगर्भं स्यात्पितृतर्पणवेदिका ॥ ४-१८॥

प्राकारान्तर्बहिः कार्यं श्रीमद्गोपुरभूषितम् ।
पुष्पारामजलोपेतं प्राकारान्तं च कारयेत् ॥ ४-१९॥

मृद्दारुजं तृणच्छन्नं प्रकुर्वीत शिवालयम् ।
भूमिकाद्वयविन्यासादुत्क्षिप्तं कल्पयेद्बुधः ॥ ४-२०॥

शिवदक्षिणतः कार्यं तभुक्तेर्योग्यमालयम् ।
शय्यासनसमायुक्तं वास्तुविद्याविनिर्मितम् ॥ ४-२१॥

ध्वजसिंहौ वृषगजौ चत्वारः शोभनाः स्मृताः ।
धूमश्वगर्दभध्वाङ्क्षाश्चत्वारश्चार्थनाशकाः ॥ ४-२२॥

गृहस्यायामविस्तारं कृत्वा त्रिगुणमादितः ।
अष्टभिः शोधयेदापैः शेषश्च गृहमादिशेत् ॥ ४-२३॥

इति शान्तिगृहं कृत्वा रुद्राग्निं यः प्रवर्तयेत् ।
अप्येकं दिवसं भक्त्या तस्य पुण्यफलं शृणु ॥ ४-२४॥

कलत्रपुत्रमित्राद्यैः स भृत्यैः परिवारितः ।
कुलैकविंशदुत्तार्य देवलोकमवाप्नुयात् ॥ ४-२५॥

नीलोत्पलदलश्यामाः पीनवृत्तपयोधराः ।
हेमवर्णाः स्त्रियश्चान्याः सुन्दर्यः प्रियदर्शनाः ॥ ४-२६॥

ताभिः सार्धं महाभोगैर्विमानैः सार्वकामिकैः ।

इच्छया क्रीडते तावद्यावदाभूतसम्प्लवम् ॥ ४-२७॥

ततः कल्पाग्निना सार्धं दह्यमानं सुविह्वलम् ।
दृष्ट्वा विरज्यते भूयो भवभोगमहार्णवात् ॥ ४-२८॥

ततः सम्पृच्छते रुद्रांस्तत्रस्थान्ज्ञानपारगान् ।
तेभ्यः प्राप्य शिवज्ञानं शान्तं निर्वाणमाप्नुयात् ॥ ४-२९॥

अविरक्तश्च भोगेभ्यः सप्त जन्मानि जायते ।
पृथिव्यधिपतिः श्रीमानिच्छया वा द्विजोत्तमः ॥ ४-३०॥

सप्तमाज्जन्मनश्चान्ते शिवज्ञानमनाप्नुयात् ।
ज्ञानाद्विरक्तः संसाराच्छुद्धः खान्यधितिष्ठति ॥ ४-३१॥

इत्येतदखिलं कार्यं फलमुक्तं समासतः ।
उत्सवे च पुनर्ब्रूमः प्रत्येकं द्रव्यजं फलम् ॥ ४-३२॥

सद्गन्धगुटिकामेकां लाक्षां प्राण्यङ्गवर्जिताम् ।
कर्पासास्थिप्रमाणं च हुत्वाग्नौ शृणुयात्फलम् ॥ ४-३३॥

यावत्सत्गन्धगुटिका शिवाग्नौ संख्यया हुता ।
तावत्कोट्यस्तु वर्षाणि भोगान्भुङ्क्ते शिवे पुरे ॥ ४-३४॥

एकाङ्गुलप्रमाणेन हुत्वाग्नौ चन्दनाहुतिम् ।
वर्षकोटिद्वयं भोगैर्दिव्यैः शिवपुरे वसेत् ॥ ४-३५॥

यावत्केसरसंख्यानं कुसुमस्यानले हुतम् ।
तावद्युगसहस्राणि शिवलोके महीयते ॥ ४-३६॥

नागकेसरपुष्पं तु कुङ्कुमार्धेन कीर्तितम् ।
यत्फलं चन्दनस्योक्तमुशीरस्य तदर्धकम् ॥ ४-३७॥

यत्पुष्पधूपभष्यान्न- दधिक्षीरघृतादिभिः ।
पुण्यलिङ्गार्चने प्रोक्तं तद्धोमस्य दशाधिकम् ॥ ४-३८॥

हुत्वाग्नौ समिधस्तिस्रौ शिवोमास्कन्दनामभिः ।
पश्चाद्दद्यात्तिलान्नानि होमयीत यथाक्रमम् ॥ ४-३९॥

पलाशाङ्कुरजारिष्ट- पालाल्यः(?) समिधः शुभाः ।
पृषदाज्यप्लुता हुत्वा शृणु यत्फलमाप्नुयात् ॥ ४-४०॥

पलाशाङ्कुरसंख्यानां यावदग्नौ हुतं भवेत् ।
तावत्कल्पान्महाभोगैः शिवलोके महीयते ॥ ४-४१॥

तल्लक्ष्यमध्यसंभूतं हुत्वाग्नौ समिधः शुभाः ।
कल्पार्धसंमितं कालं भोगान्भुङ्क्ते शिवे पुरे ॥ ४-४२॥

शमीसमित्फलं देयमब्दानपि च लक्षकम् ।
शम्यर्धफलवच्छेषाः समिधः क्षीरवृक्षजाः ॥ ४-४३॥

तिलसंख्यांस्तिलान्हुत्वा ह्याज्याक्ता(?) यावती भवेत् ।
तावत्स वर्षलक्षांस्तु भोगान्भुङ्क्ते शिवे पुरे ॥ ४-४४॥

यावत्सुरौषधीरज्ञस्(?) तिलतुल्यफलं स्मृतम् ।
इतरेभ्यस्तिलेभ्यश्च कृष्णानां द्विगुणं फलम् ॥ ४-४५॥

लाजाक्षताः सगोधूमाः वर्षलक्षफलप्रदाः ।
दशसाहस्रिका ज्ञेयाः शेषाः स्युर्बीजजातयः ॥ ४-४६॥

पलाशेन्धनजे वह्नौ होमस्य द्विगुणं फलम् ।
क्षीरवृक्षसमृद्धे ऽग्नौ फलं सार्धाधिकं भवेत् ॥ ४-४७॥

असमिद्धे सधूमे च होमकर्म निरर्थकम् ।
अन्धश्च जायमानः स्याद्दारिद्र्योपहतस्तथा ॥ ४-४८॥

न च कण्टकिभिर्वृक्षैरग्निं प्रज्वाल्य होमयेत् ।
शुष्कैर्नवैः प्रशस्तैश्च काष्ठैरग्निं समिन्धयेत् ॥ ४-४९॥

एवमाज्याहुतिं हुत्वा शिवलोकमवाप्नुयात् ।
तत्र कल्पशतं भोगान्भुङ्क्ते दिव्यान्यथेप्सितान् ॥ ४-५०॥

स्रुचैकाहितमात्रेण व्रतस्यापूरितेन च ।
याहुतिर्दीयते वह्नौ सा पूर्णाहुतिरुच्यते ॥ ४-५१॥

एकां पूर्णाहुतिं हुत्वा शिवेन शिवभावितः ।
सर्वकाममवाप्नोति शिवलोके व्यवस्थितः ॥ ४-५२॥

अशेषकुलजैर्सार्धं स भृत्यैः परिवारितः ।
आभूतसम्प्लवं यावद्भोगान्भुङ्क्ते यथेप्सितान् ॥ ४-५३॥

ततश्च प्रलये प्राप्ते सम्प्राप्य ज्ञानमुत्तमम् ।
प्रसादादीश्वरस्यैव मुच्यते भवसागरात् ॥ ४-५४॥

शिवपूर्णाहुतिं वह्नौ पतन्तीं यः प्रपश्यति ।
सो ऽपि पापरि नरः सर्वैर्मुक्तः शिवपुरं व्रजेत् ॥ ४-५५॥

शिवाग्निधूमसंस्पृष्टा जीवाः सर्वे चराचराः ।
ते ऽपि पापविनिर्मुक्ताः स्वर्गं यान्ति न संशयः ॥ ४-५६॥

शिवयज्ञमहावेद्या जायते ये न सन्ति वा ।
ते ऽपि यान्ति शिवस्थानं जीवाः स्थावरजङ्गमाः ॥ ४-५७॥

पूर्णाहुतिं घृताभावे क्षीरतैलेन कल्पयेत् ।
होमयेदतसीतैलं तिलतैलं विना नरः ॥ ४-५८॥

सर्षपेङ्गुडिकाशाम्र- करञ्जमधुकाक्षजम् ।
प्रियङ्गुबिल्वपैप्पल्य- नालिकेरसमुद्भवम्(?) ॥ ४-५९॥

इत्येवमादिकं तैलमाज्याभावे प्रकल्पयेत् ।
दूर्वया बिल्वपत्त्रैर्वा समिधः सम्प्रकीर्तिताः ॥ ४-६०॥

अन्नार्थं होमयेत्क्षीरं दधि मूलफलानि वा ।
तिलार्थं तण्डुलैः कुर्याद्दर्भार्थं हरितैस्तृणैः ॥ ४-६१॥

परिधीनामभावेन शरैर्वंशैश्च कल्पयेत् ।
इन्धनानामभावेन दीपयेत्तृणगोमयैः ॥ ४-६२॥

गोमयानामभावेन महत्यम्भसि होमयेत् ।
अपामसंभवे होमं भूमिभागे मनोहरे ॥ ४-६३॥

विप्रस्य दक्षिणे पाणावश्वत्थे तदभावतः ।
छागस्य दक्षिणे कर्णे कुशमूले च होमयेत् ॥ ४-६४॥

स्वात्माग्नौ होमयेत्प्राज्ञः सर्वाग्नीनामसंभवे ।

अभावे न त्यजेत्कर्म कर्मयोगविधौ स्थितः ॥ ४-६५॥

आपत्काले ऽपि यः कुर्याच्छिवाग्नेर्मनसार्चनम् ।
स मोहकञ्चुकं त्यक्त्वा परां शान्तिमवाप्नुयात् ॥ ४-६६॥

प्राणाग्निहोत्रं कुर्वन्ति परमं शिवयोगिनः ।
बाह्यकर्मविनिर्मुक्ता ज्ञानध्यानसमाकुलाः ॥ ४-६७॥

॥ इति शिवोपनिषदि शान्तिगृहाग्निकार्याध्यायश्चतुर्थः ॥

अथाग्नेयं महास्नानमलक्ष्मीमलनाशनम् ।
सर्वपापहरं दिव्यं तपः श्रीकीर्तिवर्धनम् ॥ ५-१॥

अग्निरूपेण रुद्रेण स्वतेजः परमं बलम् ।
भूतिरूपं समुद्गीर्णं विशुद्धं दुरितापहम् ॥ ५-२॥

यक्षरक्षःपिशाचानां ध्वंसनं मन्त्रसत्कृतम् ।
रक्षार्थं बालरूपाणां सूतिकानां गृहेषु च ॥ ५-३॥

यश्च भुङ्क्ते द्विजः कृत्वा अन्नस्य वा परिधित्रयम्(?) ।
अपि शूद्रस्य पङ्क्तिस्थः पङ्क्तिदोषैर्न लिप्यते ॥ ५-४॥

आहारमर्धभुक्तं च कीटकेशादिदूषितम् ।
तावन्मात्रं समुद्धृत्य भूतिस्पृष्टं विशुद्ध्यति ॥ ५-५॥

आरण्यं गोमयकृतं करीषं वा प्रशस्यते ।
शर्करापांसुनिर्मुक्तमभावे काष्ठभस्मना ॥ ५-६॥

स्वगृहाश्रमवल्लिभ्यः कुलालालयभस्मना ।
गोमयेषु च दग्धेषु हीष्टकानि च येषु च ॥ ५-७॥

सर्वत्र विद्यते भस्म दुःखापार्जनरक्षणम्(duHkhopAr) ।
शङ्खकुन्देन्दुवर्णाभमादद्याज्जन्तुवर्जितम् ॥ ५-८॥

भस्मानीय प्रयत्नेन तद्रक्षेद्यत्नवांस्तथा ।
मार्जारमूषिकाद्यैश्च नोपहन्येत तद्यथा ॥ ५-९॥

पञ्चदोषविनिर्मुक्तं गुणपञ्चकसंयुतम् ।
शिवैकादशिकाजप्तं शिवभस्म प्रकीर्तितम् ॥ ५-१०॥

जातिकारुकवाक्काय- स्थानदुष्टं च पञ्चमम् ।
पापघ्नं शांकरं रक्षा- पवित्रं योगदं गुणाः(?) ॥ ५-११॥

शिवव्रतस्य शान्तस्य भासकत्वाच्छुभस्य च ।
भक्षणात्सर्वपापानां भस्मेति परिकीर्तितम् ॥ ५-१२॥

भस्मस्नानं शिवस्नानं वारुणादधिकं स्मृतम् ।
जन्तुशैवालनिर्मुक्तमाग्नेयं पङ्कवर्जितम् ॥ ५-१३॥

अपवित्रं भवेत्तोयं निशि पूर्वमनाहृतम् ।
नदीतडागवापिषु गिरिप्रस्रवणेषु च ॥ ५-१४॥

स्नानं साधारणं प्रोक्तं वारुणं सर्वदेहिनाम् ।
असाधारणमेवोक्तं भस्मस्नानं द्विजन्मनाम् ॥ ५-१५॥

त्रिकालं वारुणस्नानादनारोग्यं प्रजायते ।
आग्नेयं रोगशमनमेतस्माद्सार्वकामिकम् ॥ ५-१६॥

संध्यात्रये ऽर्धरात्रे च भुक्त्वा चान्नविरेचने ।
शिवयोग्याचरेत्स्नानमुच्चारादिक्रियासु च ॥ ५-१७॥

भस्मास्तृते महीभागे समे जन्तुविवर्जिते ।
ध्यायमानः शिवं योगी रजन्यन्तं शयीत च ॥ ५-१८॥

एकरात्रोषितस्यापि या गतिर्भस्मशायिनः ।
न सा शक्या गृहस्थेन प्राप्तुं यज्ञशतैरपि ॥ ५-१९॥

गृहस्थस्त्र्यायुषोंकारैः स्नानं कुर्यात्त्रिपुण्ड्रकैः ।
यतिः सार्वाङ्गिकं स्नानमापादतलमस्तकात् ॥ ५-२०॥

शिवभक्तस्त्रिधा वेद्यां भस्मस्नानफलं लभेत् ।
हृदि मूर्ध्नि ललाटे च शूद्रः शिवगृहाश्रमी ॥ ५-२१॥

गणाः प्रव्रजिताः शान्ताः भूतिमालभ्य पञ्चधा ।

शिरोललाटे हृद्बाह्वोर्भस्मस्नानफलं लभेत् ॥ ५-२२॥

संवत्सरं तदर्धं वा चतुर्दश्यष्टमीषु च ।
यः कुर्याद्भस्मना स्नानं तस्य पुण्यफलं शृनु ॥ ५-२३॥

शिवभस्मनि यावन्तः समेताः परमाणवः ।
तावद्वर्षसहस्राणि शिवलोके महीयते ॥ ५-२४॥

एकविंशकुलोपेतः पत्नीपुत्रादिसंयुतः ।
मित्रस्वजनभृत्यैश्च समस्तैः परिवारितः ॥ ५-२५॥

तत्र भुक्त्वा महाभोगानिच्छया सार्वकामिकान् ।
ज्ञानयोगं समासाद्य प्रलये मुक्तिमाप्नुयात् ॥ ५-२६॥

भस्म भस्मान्तिकं येन गृहीतं नैष्ठिकव्रतम्(?) ।
अनेन वै स देहेन रुद्रश्चङ्क्रमते क्षितौ ॥ ५-२७॥

भस्मस्नानरतं शान्तं ये नमन्ति दिने दिने ।
ते सर्वपापनिर्मुक्ता नरा यान्ति शिवं पुरम् ॥ ५-२८॥

इत्येतत्परमं स्नानमाग्नेयं शिवनिर्मितम् ।
त्रिसंध्यमाचरेन्नित्यं जापी योगमवाप्नुयात् ॥ ५-२९॥

भस्मानीय प्रदद्याद्यः स्नानार्थं शिवयोगिने ।
कल्पं शिवपुरे भोगान्भुक्त्वान्ते स्याद्द्विजोत्तमः ॥ ५-३०॥

आग्नेयं वारुणं मान्त्रं वायव्यं त्वैन्द्रपञ्चमम् ।
मानसं शान्तितोयं च ज्ञानस्नानं तथाष्टमम् ॥ ५-३१ ॥

आग्नेयं रुद्रमन्त्रेण भस्मस्नानमनुत्तमम् ।
अम्भसा वारुणं स्नानम्कार्यं वारुणमूर्तिना ॥ ५-३२॥

मूर्धानं पाणिनालभ्य शिवैकादशिकां जपेत् ।
ध्यायमानः शिवं शान्तम्मन्त्रस्नानं परं स्मृतम् ॥ ५-३३॥

गवां खुरपुटोत्खात- पवनोद्धूतरेणुना ।
कार्यं वायव्यकं स्नानम्मन्त्रेण मरुदात्मना ॥ ५-३४॥

व्यभ्रे ऽर्के वर्षति स्नानं कुर्यादैन्द्रीं दिशं स्थितः ।
आकाशमूर्तिमन्त्रेण तदैन्द्रमिति कीर्तितम् ॥ ५-३५॥

उदकं पाणिना गृह्य सर्वतीर्थानि संस्मरेत् ।
अभ्युक्षयेच्छिरस्तेन स्नानं मानसमुच्यते ॥ ५-३६॥

पृथिव्यां यानि तीर्थानि सरांस्यायतनानि च ।
तेषु स्नातस्य यत्पुण्यं तत्पुण्यं क्षान्तिवारिणा ॥ ५-३७॥

न तथा शुध्यते तीर्थैस्तपोभिर्वा महाध्वरैः ।
पुरुषः सर्वदानैश्च यथा क्षान्त्या विशुद्ध्यति ॥ ५-३८॥

आक्रुष्टस्ताडितस्तस्मादधिक्षिप्तस्तिरस्कृत ।
क्षमेदक्षममानानां स्वर्गमोक्षजिगीषया ॥ ५-३९॥

यैव ब्रह्मविदां प्राप्तिर्यैव प्राप्तिस्तपस्विनाम् ।
यैव योगाभियुक्तानां गतिः सैव क्षमावताम् ॥ ५-४०॥

ज्ञानामलाम्भसा स्नातः सर्वदैव मुनिः शुचिः ।
निर्मलः सुविशुद्धश्च विज्ञेयः सूर्यरश्मिवत् ॥ ५-४१॥

मेध्यामेध्यरसं यद्वदपि वत्स विना करैः ।
नैव लिप्यति तद्दोषैस्तद्वज्ज्ञानी सुनिर्मलः ॥ ५-४२॥

एषामेकतमे स्नातः शुद्धभावः शिवं व्रजेत् ।
अशुद्धभावः स्नातो ऽपि पूजयन्नाप्नुयात्फलम् ॥ ५-४३॥

जलं मन्त्रं दया दानं सत्यमिन्द्रियसंयमः ।
ज्ञानं भावात्मशुद्धिश्च शौचमष्टविधं श्रुतम् ॥ ५-४४॥

अङ्गुष्ठतलमूले च ब्राह्मं तीर्थमवस्थितम् ।
तेनाचम्य भवेच्छुद्धः शिवमन्त्रेण भावितः ॥ ५-४५॥

यदधः कन्यकायाश्च तत्तीर्थं दैवमुच्यते ।
तीर्थं प्रदेशिनीमूले पित्र्यं पितृविधोदयम्(?) ॥ ५-४६॥

मध्यमाङ्गुलिमध्येन तीर्थमारिषमुच्यते ।
करपुष्करमध्ये तु शिवतीर्थं प्रतिष्ठितम् ॥ ५-४७॥

वामपाणितले तीर्थमौमम्नाम प्रकीर्तितम् ।
शिवोमातीर्थसंयोगात्कुर्यात्स्नानाभिषेचनम् ॥ ५-४८॥

देवान्दैवेन तीर्थेन तर्पयेदकृताम्भसा ।
उद्धृत्य दक्षिणं पाणिमुपवीती सदा बुधः ॥ ५-४९॥

प्राचीनावीतिना कार्यं पितॄणां तिलवारिणा ।
तर्पणं सर्वभूतानामारिषेण निवीतिना ॥ ५-५०॥

सव्यस्कन्धे यदा सूत्रमुपवीत्युच्यते तदा ।
प्राचीनावीत्यसव्येन निवीती कण्ठसंस्थिते ॥ ५-५१॥

पितॄणां तर्पणं कृत्वा सूर्यायार्घ्यं प्रकल्पयेत् ।
उपस्थाय ततः सूर्यं यजेच्छिवमनन्तरम् ॥ ५-५२॥

॥ इति शिवोपनिषदि शिवभस्मस्नानाध्यायः पञ्चमः ॥

अथ भक्त्या शिवं पूज्य नैवेद्यमुपकल्पयेत् ।
यदन्नमात्मनाश्नीयात्तस्याग्रे विनिवेदयेत् ॥ ६-१॥

यः कृत्वा भक्ष्यभोज्यानि यत्नेन विनिवेदयेत् ।
शिवाय स शिवे लोके कल्पकोटिं प्रमोदते ॥ ६-२॥

यः पक्वं श्रीफलं दद्याच्छिवाय विनिवेदयेत् ।
गुरोर्वा होमयेद्वापि तस्य पुण्यफलं शृणु ॥ ६-३॥

श्रीमद्भिः स महायानैर्भोगान्भुङ्क्ते शिवे पुरे ।
वर्षाणामयुतं साग्रं तदन्ते श्रीपतिर्भवेत् ॥ ६-४॥

कपित्थमेकं यः पक्वमीश्वराय निवेदयेत् ।
वर्षलक्षं महाभोगैः शिवलोके महीयते ॥ ६-५॥

एकमाम्रफलं पक्वं यः शम्भोर्विनिवेदयेत् ।
वर्षाणाम्युतं भोगैः क्रीडते स शिवे पुरे ॥ ६-६॥

एकं वटफलं पक्वं यः शिवाय निवेदयेत् ।
वर्षलक्षं महाभोगैः शिवलोके महीयते ॥ ६-७॥

यः पक्वं दाडिमं चैकं दद्याद्विकसितं नवम् ।
शिवाय गुरवे वापि तस्य पुण्यफलं शृणु ॥ ६-८॥

यावत्तद्बीजसंख्यानं शोभनं परिकीर्तितम् ।
तावदष्टायुतान्युच्चैः शिवलोके महीयते ॥ ६-९॥

द्राक्षाफलानि पक्वानि यः शिवाय निवेदयेत् ।
भक्त्या वा शिवयोगिभ्यस्तस्य पुण्यफलं शृणु ॥ ६-१०॥

यावत्तत्फलसंख्यानमुभयोर्विनिवेदितम् ।
तावद्युगसहस्राणि रुद्रलोके महीयते ॥ ६-११॥

द्राक्षाफलेषु यत्पुण्यं तत्खर्जूरफलेषु च ।
तदेव राजवृक्षेषु पारावतफलेषु च ॥ ६-१२॥

यो नारङ्गफलं पक्वं विनिवेद्य महेश्वरे ।
अष्टलक्षं महाभोगैः कृडते स शिवे पुरे ॥ ६-१३॥

बीजपूरेषु तस्यार्धं तदर्धं लिकुचेषु च ।
जम्बूफलेषु यत्पुण्यं तत्पुण्यं तिन्दुकेषु च ॥ ६-१४॥

पनसं नारिकेलं वा शिवाय विनिवेदयेत् ।
वर्षलक्षं महाभोगैः शिवलोके महीयते ॥ ६-१५॥

पुरुषं च प्रियालं च मधूककुसुमानि च ।
जम्बूफलानि पक्वानि वैकङ्कतफलानि च ॥ ६-१६॥

निवेद्य भक्त्या शर्वाय प्रत्येकं तु फले फले ।
दशवर्षसहस्राणि रुद्रलोके महीयते ॥ ६-१७॥

क्षीरिकायाः फलं पक्वं यः शिवाय निवेदयेत् ।
वर्षलक्षं महाभोगैर्मोदते स शिवे पुरे ॥ ६-१८॥

वालुकात्रपुसादीनि यः फलानि निवेदयेत् ।
शिवाय गुरवे वापि पक्वं च करमर्दकम् ॥ ६-१९॥

दशवर्षसहस्राणि रुद्रलोके महीयते ।
बदराणि सुपक्वानि तिन्तिडीकफलानि च ॥ ६-२०॥

दर्शनीयानि पक्वानि ह्यामलक्याः फलानि च ।
एवमादीनि चान्यानि शाकमूलफलानि च ॥ ६-२१॥

निवेदयति शर्वाय शृणु यत्फलमाप्नुयात् ।
एकैकस्मिन्फले भोगान्प्राप्नुयादनुपूर्वशः ॥ ६-२२॥

पञ्चवर्षसहस्राणि रुद्रलोके महीयते ।
गोधूमचन्दकाद्यानि सुकृतं सक्तुभर्जितम् ॥ ६-२३॥

निवेदयीत शर्वाय तस्य पुण्यफलं शृणु ।
यावत्तद्बीजसंख्यानं शुभं भ्रष्टं निवेदयेत् ॥ ६-२४॥

तावद्वर्षसहस्राणि रुद्रलोके महीयते ।
यः पक्वानीक्षुदण्डानि शिवाय विनिवेदयेत् ॥ ६-२५॥

गुरवे वापि तद्भक्त्या तस्य पुण्यफलं शृणु ।
इक्षुपर्णानि चैकैकं वर्षलोकं प्रमोदते ॥ ६-२६॥

साकं शिवपुरे भोगैः पौण्ड्रं पञ्चगुणं फलम् ।
निवेद्य परमेशाय शुक्तिमात्ररसस्य तु ॥ ६-२७॥

वर्षकोटिं महाभोगैः शिवलोके महीयते ।
निवेद्य फाणितं शुद्धं शिवाय गुरवे ऽपि वा ॥ ६-२८॥

रसात्सहस्रगुणितं फलं प्राप्नोति मानवः ।
गुडस्य फलमेकं यः शिवाय विनिवेदयेत् ॥ ६-२९॥

अम्बकोटिं शिवे लोके महाभोगैः प्रमोदते ।
खण्डस्य पलनैवेद्यं गुडाच्छतगुणं फलम् ॥ ६-३०॥

खण्डात्सहस्रगुणितं शर्कराया निवेदने ।
मत्सण्डिकां महाशुद्धां शंकराय निवेदयेत् ॥ ६-३१॥

कल्पकोटिं नरः साग्रं शिवलोके महीयते ।

परिशुद्धं भृष्टमाज्यं सिद्धं चैव सुसंस्कृतम् ॥ ६-३२॥

मासं निवेद्य शर्वाय शृणु यत्फलमाप्नुयात् ।
अशेषफलदानेन यत्पुण्यं परिकीर्तितम् ॥ ६-३३॥

तत्पुण्यं प्राप्नुयात्सर्वं महादाननिवेदने ।
पनसानि च दिव्यानि स्वादूनि सुरभीणि च ॥ ६-३४॥

निवेदयेत्तु शर्वाय तस्य पुण्यफलं शृणु ।
कल्पकोटिं नरः साग्रं शिवलोके व्यवस्थितः ॥ ६-३५॥

पिबन्शिवामृतं दिव्यं महाभोगैः प्रमोदते ।
दिने दिने च यस्त्वापं वस्त्रपूतं समाचरेत् ॥ ६-३६॥

सुखाय शिवभक्तेभ्यस्तस्य पुण्यफलं शृणु ।
महासरांसि यः कुर्याद्भवेत्पुण्यं शिवाग्रतः ॥ ६-३७॥

तत्पुण्यं सकलं प्राप्य शिवलोके महीयते ।
यदिष्टमात्मनः किंचिदन्नपानफलादिकम् ॥ ६-३८॥

तत्तच्छिवाय देयं स्यादुत्तमं भोगमिच्छता ।
न शिवः परिपूर्णत्वात्किंचिदश्नाति कस्यचित् ॥ ६-३९॥

किन्त्वीश्वरनिभं कृत्वा सर्वमात्मनि दीयते ।
न रोहति यथा बीजं स्वस्थमाश्रयवर्जितम् ॥ ६-४०॥

पुण्यबीजं तथा सूक्ष्मं निष्फलं स्यान्निराश्रयम् ।
सुक्षेत्रेषु यथा बीजमुप्तं भवति सत्फलम् ॥ ६-४१॥

अल्पमप्यक्षयं तद्वत्पुण्यं शिवसमाश्रयात् ।
तस्मादीश्वरमुद्दिश्य यद्यदात्मनि रोचते ॥ ६-४२॥

तत्तदीश्वरभक्तेभ्यः प्रदातव्यं फलार्थिना ।
यः शिवाय गुरोर्वापि रचयेन्मणिभूमिकम् ॥ ६-४३॥

नैवेद्य भोजनार्थं यः पत्त्रैः पुष्पैश्च शोभनम् ।
यावत्तत्पत्त्रपुष्पाणां परिसंख्या विधीयते ॥ ६-४४॥

तावद्वर्षसहस्राणि सुरलोके महीयते ।
पलाशकदलीपद्म- पत्राणि च विशेषतः ॥ ६-४५॥

दत्त्वा शिवाय गुरवे शृणु यत्फलमाप्नुयात् ।
यावत्तत्पत्रसंख्यानमीश्वराय निवेदितम् ॥ ६-४६॥

तावदब्दायुतानां स लोके भोगानवाप्नुयात् ।
यावत्ताम्बुलपत्राणि पूगांश्च विनिवेदयेत् ॥ ६-४७॥

तावन्ति वर्षलक्षाणि शिवलोके महीयते ।
यच्छुद्धं शङ्खचूर्णं वा गुरवे विनिवेदयेत् ॥ ६-४८॥

ताम्बूलयोगसिद्ध्यर्थं तस्य पुण्यफलं शृणु ।
यावत्ताम्बूलपत्राणि चूर्णमानेन भक्षयेत् ॥ ६-४९॥

तावद्वर्षसहस्राणि रुद्रलोके महीयते ।
जातीफलं सकङ्कोलं लताकस्तूरिकोत्पलम् ॥ ६-५०॥

इत्येतानि सुगन्धीनि फलानि विनिवेदयेत् ।
फले फले महाभोगैर्वर्षलक्षं तु यत्नतः ॥ ६-५१॥

कामिकेन विमानेन क्रीडते स शिवे पुरे ।
त्रुटिमात्रप्रमाणेन कर्पूरस्य शिवे गुरौ ॥ ६-५२॥

वर्षकोटिं महाभोगैः शिवलोके महीयते ।
पूगताम्बूलपत्राणामाधारं यो निवेदयेत् ॥ ६-५३॥

वर्षकोट्यष्टकं भोगैः शिवलोके महीयते ।
यश्चूएणाधारसत्पात्रं कस्यापि विनिवेदयेत् ॥ ६-५४॥

मोदते स शिवे लोके वर्षकोटीश्चतुर्दश ।
मृत्काष्ठवंशखण्डानि यः प्रदद्याच्छिवाश्रमे ॥ ६-५५॥

प्राप्नुयाद्विपुलान्भोगान्दिव्याञ्छिवपुरे नरः ।
माणिक्यं कलशं पात्रीं स्थाल्यादीन्भाण्डसम्पुटान् ॥ ६-५६॥

दत्त्वा शिवाग्रजस्तेभ्यः शिवलोके महीयते ।
तोयाधारपिधानानि मृद्वस्त्रतरुजानि वा ॥ ६-५७॥

वंशालाबुसमुत्थानि दत्त्वाप्नोति शिवं पुरम् ।
पञ्चसंमार्जनीतोयं गोमयाञ्जनकर्पटान् ॥ ६-५८॥

मृत्कुम्भपीटिकां दद्याद्भोगाञ्छिवपुरे लभेत् ।
यः पुष्पधूपगन्धानां दधिक्षीरघृताम्भसाम् ॥ ६-५९॥

दद्यादाधारपात्राणि शिवलोके स गच्छति ।
वंशतालादिसंभूतं पुष्पाधारकरण्डकम् ॥ ६-६०॥

इत्येवमाद्यान्यो दद्याच्छिवलोकमवाप्नुयात् ।
यः स्रुक्स्रुवादिपात्राणि होमार्थं विनिवेदयेत् ॥ ६-६१॥

वर्षकोटिं महाभागैः शिवलोके महीयते ।
यः सर्वधातुसंयुक्तं दद्याल्लवणपर्वतम् ॥ ६-६२॥

शिवाय गुरवे वापि तस्य पुण्यफलं शृणु ।
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥ ६-६३॥

स गोत्रभृत्यसंयुक्तो वसेच्छिवपुरे नरः ।
विमानयानैः श्रीमद्भिः सर्वकामसमन्वितैः ॥ ६-६४॥

भोगान्भुक्त्वा तु विपुलांस्तदन्ते स महीपतिः ।
मनःशिलां हरीतालं राजपट्टं च हिङ्गुलम् ॥ ६-६५॥

गैरिकं मणिदन्तं च हेमतोयं तथाष्टमम् ।
यश्च तं पर्वतवरं शालितण्डुलकल्पितम् ॥ ६-६६॥

शिवायगुरवे वापि तस्य पुण्यफलं शृणु ।
कल्पकोटिशतं साग्रं भोगान्भुङ्क्ते शिवे पुरे ॥ ६-६७॥

यः सर्वधान्यशिखरैरुपेतं यवपर्वतम् ।
घृततैलनदीयुक्तं तस्य पुण्यफलं शृणु ॥ ६-६८॥

कल्पकोटिशतं साग्रं भोगान्भुङ्क्ते शिवे पुरे ।
समस्तकुलजैः सार्धं तस्यान्ते स महीपतिः ॥ ६-६९॥

तिलधेनुं प्रदद्याद्यः कृत्वा कृष्णाजिने नरः ।

कपिलायाः प्रदानस्य यत्फलं तदवाप्नुयात् ॥ ६-७०॥

घृतधेनुं नरः कृत्वा कांस्यपात्रे सकाञ्चनान् ।
निवेद्य गोप्रदानस्य समग्रं फलमाप्नुयात् ॥ ६-७१॥

द्वीपिचर्मणि यः स्थाप्य प्रदद्याल्लवणाढकम् ।
अशेषरसदानस्य यत्पुण्यं तदवाप्नुयात् ॥ ६-७२॥

मरिचाढेन कुर्वीत(?) मारीचं नाम पर्वतम् ।
दद्याद्यज्जीरकं पूर्वमाग्नेयं हिङ्गुमुत्तमम् ॥ ६-७३॥

दक्षिणे गुडशुण्ठीं च नैरृते नागकेसरम् ।
पिप्पलीं पश्चिमे दद्याद्वायव्ये कृष्णजीरकम् ॥ ६-७४॥

कौबेर्यामजमोदं च त्वगेलाश्चेशदैवते ।
कुस्तुम्बर्याः प्रदेयाः स्युर्बहिः प्राकारतः स्थिताः ॥ ६-७५॥

ककुभामन्तरालेषु समन्तात्सैन्धवं न्यसेत् ।
सपुष्पाक्षततोयेन शिवाय विनिवेदयेत् ॥ ६-७६॥

यावत्तद्वीपसंख्यानं सर्वमेकत्र पर्वते ।
तावद्वर्षशतादूर्ध्वं भोगान्भुङ्क्ते शिवे पुरे ॥ ६-७७॥

कूश्माण्डं मध्यतः स्थाप्य कालिङ्गं पूर्वतो न्यसेत् ।
दक्षिणे क्षीरतुम्बीं तु वृन्ताकं पश्चिमे न्यसेत् ॥ ६-७८॥

पटीसान्युत्तरे स्थाप्य कर्कटीमीशदैवते ।
न्यसेद्गजपटोलांश्च मधुरान्वह्निदैवते ॥ ६-७९॥

कारवेल्लांश्च नैरृत्यां वायव्यां निम्बकं फलम् ।
उच्चावचानि चान्यानि फलानि स्थापयेद्बहिः ॥ ६-८०॥

अभ्यर्च्य पुष्पधूपैश्च समन्तात्फलपर्वतम् ।
शिवाय गुरवे वापि प्रणिपत्य निवेदयेत् ॥ ६-८१॥

यावत्तत्फलसंख्यानं तद्वीपानां च मध्यतः ।
तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥ ६-८२॥

मूलकं मध्यतः स्थाप्य तत्पूर्वे वालमूलकम् ।
आग्नेय्यां वास्तुकं स्थाप्य याम्यायां क्षारवास्तुकम् ॥ ६-८३॥

पालक्यं नैरृते स्थाप्य सुमुखं पश्चिमे न्यसेत् ।
कुहद्रकं च वायव्यामुत्तरे वापि तालिकीम् ॥ ६-८४॥

कुसुम्भशाकमैशान्यां सर्वशाकानि तद्बहिः ।
पूर्वक्रमेण विन्यस्य शिवाय विनिवेदयेत् ॥ ६-८५॥

यावत्तन्मूलनालानां पत्त्रसंख्या च कीर्तिता ।
तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥ ६-८६॥

दत्त्वा लभेन्महाभोगान्गुग्गुल्वद्रेः पलद्वयम् ।
वर्षकोटिद्वयं स्वर्गे द्विगुणं गुडमिश्रितैः ॥ ६-८७॥

गुडार्द्रकं सलवणमाम्रमञ्जरिसंयुतम् ।
निवेद्य गुरवे भक्त्या सौभाग्यं परमं लभेत् ॥ ६-८८॥

हस्तारोप्येण वा कृत्वा महारत्नान्वितां महीम् ।
निवेदयित्वा शर्वाय शिवतुल्यः प्रजायते ॥ ६-८९॥

वज्रेन्द्रनीलवैडूर्य- पद्मरागं समौक्तिकम् ।
कीटपक्षं सुवर्णं च महारत्नानि सप्त वै ॥ ६-९०॥

यश्च सिंहासनं दद्यान्महारत्नान्वितं नृपः ।
क्षुद्ररत्नैश्च विविधैस्तस्य पुण्यफलं शृणु ॥ ६-९१॥

कुलत्रिंशकसंयुक्तः सान्तःपुरपरिच्छदः ।
समस्तभृत्यसंयुक्तः शिवलोके महीयते ॥ ६-९२॥

तत्र भुक्त्वा महाभोगान्शिवतुल्यपराक्रमः ।
आमहाप्रलयं यावत्तदन्ते मुक्तिमाप्नुयात् ॥ ६-९३॥

यदि चेद्राज्यमाकङ्क्षेत्ततः सर्वसमाहितः ।
सप्तद्वीपसमुद्रायाः क्षितेरधिपतिर्भवेत् ॥ ६-९४॥

जन्मकोटिसहस्राणि जन्मकोटिशतानि च ।
राज्यं कृत्वा ततश्चान्ते पुनः शिवपुरं व्रजेत् ॥ ६-९५॥

एतदेव फलं ज्ञेयं मकुटाभरणादिषु ।
रत्नासनप्रदानेन पादुके विनिवेदयेत् ॥ ६-९६॥

दद्याद्यः केवलं वज्रं शुद्धं गोधूममात्रकम् ।
शिवाय स शिवे लोके तिष्ठेदाप्रलयं सुखी ॥ ६-९७॥

इन्द्रनीलप्रदानेन स वैडूर्यप्रदानतः ।
मोदते विविधैर्भोगैः कल्पकोटिं शिवे पुरे ॥ ६-९८॥

मसूरमात्रमपि यः पद्मरागं सुशोभनम् ।
निवेदयित्वा शर्वाय मोदते कालमक्षयम् ॥ ६-९९॥

निवेद्य मौक्तिकं स्वच्छमेकभागैकमात्रकम् ।
भोगैः शिवपुरे दिव्यैः कल्पकोटिं प्रमोदते ॥ ६-१००॥

कीटपक्षं महाशुद्धं निवेद्य यवमात्रकम् ।
शिवायाद्यः शिवे लोके मोदते कालमक्षयम् ॥ ६-१०१॥

हेम्ना कृत्वा च यः पुष्पमपि माषकमात्रकम् ।
निवेदयित्वा शर्वाय वर्षकोटिं वसेद्दिवि ॥ ६-१०२॥

क्षुद्ररत्नानि यो दद्याद्धेम्नि बद्धानि शम्भवे ।
मोदते स शिवे लोके कल्पकोट्ययुतं नरः ॥ ६-१०३॥

यथा यथा महारत्नं शोभनं च यथा यथा ।
तथा तथा महत्पुण्यं ज्ञेयं तच्छिवदानतः ॥ ६-१०४॥

भूमिभागे स(?)विस्तीऋणे जम्बूद्वीपं प्रकल्पयेत् ।
अष्टावरणसंयुक्तं नगेन्द्राष्टकभूषितम् ॥ ६-१०५॥

तन्मध्ये कारयेद्दिव्यं मेरुप्रासादमुत्तमम् ।
अनेकशिखराकीर्णमशेषामरसंयुतम् ॥ ६-१०६॥

बहिः सुवर्णनिचितं सर्वरत्नोपशोभितम् ।
चतुःप्रग्रीवकोपेतं चक्षुर्लिङ्गसमायुतम् ॥ ६-१०७॥

चतुर्दिक्षु वनोपेतं चतुर्भिः संयुतैः शरैः ।

चतुर्णां पुरयुक्तेन प्राकारेण च संयुतम् ॥ ६-१०८॥

मेरुप्रासादमित्येवं हेमरत्नविभूषितम् ।
यः कारयेद्वनोपेतं सो ऽनन्तफलमाप्नुयात् ॥ ६-१०९॥

भूम्यम्भःपरमाणूनां यथा संख्या न विद्यते ।
शिवायतनपुण्यस्य तथा संख्या न विद्यते ॥ ६-११०॥

कुलत्रिंशकसंयुक्तः सर्वभृत्यसमन्वितः ।
कलत्रपुत्रमित्रैश्च सर्वस्वजनसंयुतः ॥ ६-१११॥

आश्रिततोपाश्रितैः सर्वैरशेषगणसंयुतः ।
यथा शिवस्तथैवायं शर्वलोके स पूज्यते ॥ ६-११२॥

न च मानुष्यकं लोकमागच्छेत्कृपणं पुनः ।
सर्वज्ञः परिपूर्णश्च मुक्तः स्वात्मनि तिष्ठति ॥ ६-११३॥

यः शिवाय वनं कृत्वा मुदाब्दसलिलोत्थितम्(?) ।
तद्दण्डकोपशोभं च हस्ते कुर्वीत सर्वदा ॥ ६-११४॥

शोभयेद्भूतनाथं वा चन्द्रशालां क्वचित्क्वचित् ।
वेदीं वाथाभ्यपद्यन्त प्रोन्नताः स्तम्भपङ्क्तयः ॥ ६-११५॥

शातकुम्भमयीं वापि सर्वलक्षणसंयुताम् ।
ईश्वरप्रतिमां सौम्यां कारयेत्पुरुषोच्छ्रिताम् ॥ ६-११६॥

त्रिशूलसव्यहस्तां च वरदाभयदायिकां ।
सव्यहस्ताक्षमालां च जटाकुसुमभूषिताम् ॥ ६-११७॥

पद्मसिंहासनासीनां वृषस्थां वा समुच्छ्रिताम् ।
विमानस्थां रथस्थां वा वेदिस्थां वा प्रभान्विताम् ॥ ६-११८॥

सौम्यवक्त्रां करालां वा महाभैरवरूपिणीम् ।
अत्युच्छ्रितां सुविस्तीर्णां नृत्यस्थां योगसंस्थिताम् ॥ ६-११९॥

कुर्यादसंभवे हेम्नस्तारेण विमलेन च ।
आरकूटमयीं वापि ताम्रमृच्छैलदारुजाम् ॥ ६-१२०॥

अशेषकैः सरूपैश्च वर्णकैर्वा पटे लिखेत् ।
कुड्ये वा फलके वापि भक्त्या वित्तानुसारतः ॥ ६-१२१॥

एकां सपरिवारां वा पार्वतीं गणसंयुताम् ।
प्रतीहारसमोपेतां(?) कुर्यादेवाविकल्पतः ॥ ६-१२२॥

पीठं वा कारयेद्रौप्यं ताम्रं पित्तलसंभवम् ।
चतुर्मुखैकवक्त्रं वा बहिः काञ्चनसंस्कृतम् ॥ ६-१२३॥

पृथक्पृथगनेकानि कारयित्वा मुखानि तु ।
सौम्यभैरवरूपाणि शिवस्य बहुरूपिणः ॥ ६-१२४॥

नानाभरणयुक्तानि हेमरौप्यकृतानि च ।
शिवस्य रथयात्रायां तानि लोकस्य दर्शयेत् ॥ ६-१२५॥

उक्तानि यानि पुण्यानि संक्षेपेण पृथक्पृथक् ।
कृत्वैकेन ममैतेषामक्षयं फलमाप्नुयात् ॥ ६-१२६॥

मातुः पितुः सहोपायैर्(?) दशभिर्दशभिः कुलैः ।
कलत्रपुत्रमित्राद्यैर्भृत्यैर्युक्तः स बान्धवैः ॥ ६-१२७॥

अयुतेन विमानानां सर्वकामयुतेन च ।
भुङ्क्ते स्वयं महाभोगानन्ते मुक्तिमवाप्नुयात् ॥ ६-१२८॥

मण्डपस्तम्भपर्यन्ते कीलयेद्दर्पणान्वितम् ।
अभिषिच्य जना यस्मिन्पुजां कुवन्ति बिल्वकैः ॥ ६-१२९॥

कालकालकृतिं कृत्वा कीलयेद्यः शिवाश्रमे ।
सर्वलोकोपकाराय पूजयेच्च दिने दिने ॥ ६-१३०॥

धूपवेलाप्रमाणार्थं कल्पयेद्यः शिवाश्रमे ।
क्षरन्तीं पूर्यमाणां वा सदायामे घटीं नृपः ॥ ६-१३१॥

एषामेकतमं पुण्यं कृत्वा पापविवर्जितः ।
शिवलोके नरः प्राप्य सर्वज्ञः स सुखी भवेत् ॥ ६-१३२॥

रथयात्रां प्रवक्ष्यामि शिवस्य परमात्मनः ।
सर्वलोकहितार्थाय महाशिल्पिविनिर्मिताम् ॥ ६-१३३॥

रथमध्ये समावेश्य यथा यष्टिं तु कीलयेत् ।
यष्टेर्मध्ये स्थितं कार्यं विमानमतिशोभितम् ॥ ६-१३४॥

पञ्चभौमं त्रिभौमं वा दृढवंशप्रकल्पितम् ।
कर्मणा सुनिबद्धं च रज्जुभिश्च सुसंयुतम् ॥ ६-१३५॥

पञ्चशालाण्डिकैर्युक्तं नानाभक्तिसमन्वितम् ।
चित्रवर्णपरिच्छन्नं पटैर्वा वर्णकान्वितैः ॥ ६-१३६॥

लम्बकैः सूत्रदाम्ना च घण्टाचामरभूषितम् ।
बुद्बुदैरर्धचन्द्रैश्च दर्पणैश्च समुज्ज्वलम् ॥ ६-१३७॥

कदल्यर्धध्वजैर्युक्तं महाच्छत्त्रं महाध्वजम् ।
पुष्पमालापरिक्षिप्तं सर्वशोभासमन्वितम् ॥ ६-१३८॥

महारथविमाने ऽस्मिन्स्थापयेद्गणसंयुतम् ।
ईश्वरप्रतिमां हेम्नि प्रथमे पुरमण्डपे ॥ ६-१३९॥

मुखत्रयं च बध्नीयाद्बहिः कुर्यात्तथाश्रितम् ।
पुरे पुरे बहिर्दिक्षु गृहकेषु समाश्रितम् ॥ ६-१४०॥

चतुष्कं शिववक्त्राणां संस्थाप्य प्रतिपूजयेत् ।
दिनत्रयं प्रकुर्वीत स्नानमर्चनभोजनम् ॥ ६-१४१॥

नृत्यक्रीडाप्रयोगेण गेयमङ्गलपाठकैः ।
महावादित्रनिर्घोषैः पौषपूर्णिमपर्वणि ॥ ६-१४२॥

भ्रामयेद्राजमार्गेण चतुर्थे ऽहनि तद्रथम् ।
ततः स्वस्थानमानीय तच्छेषमपि वर्धयेत् ॥ ६-१४३॥

अवधार्य जगद्धात्री प्रतिमामवतारयेत् ।
महाविमानयात्रैषा कर्तव्या पट्टके ऽपि वा ॥ ६-१४४॥

वंशैर्नवैः सुपक्वैश्च कटं कुर्याद्धरक्षमम्(?) ।
वृत्तं द्विगुणदीर्घं च चतुरश्रमधः समम् ॥ ६-१४५॥

सर्वत्र चर्मणा बद्धं महायष्टिसमाश्रितम् ।

मुखं बद्धं च कुर्वीत वंशमण्डलिना दृढम् ॥ ६-१४६॥

कटे ऽस्मिंस्तानि वस्त्राणि स्थाप्य बध्नीत यत्नतः ।
उपर्युपरि सर्वाणि तन्मध्ये प्रतिमां न्यसेत् ॥ ६-१४७॥

वर्णकैः कुङ्कुमाद्यैश्च चित्रपुष्पैश्च पूजयेत् ।
नानाभरणपूजाभिर्मुक्ताहारप्रलम्बिभिः ॥ ६-१४८॥

रथस्य महतो मध्ये स्थाप्य पट्टद्वयं दृढम् ।
अधरोत्तरभागेन मध्ये छिद्रसमन्वितम् ॥ ६-१४९॥

कटियष्टेरधोभागं स्थाप्य छिद्रमयं शुभैः ।
आबद्ध्य कीलयेद्यत्नाद्यष्ट्यर्धं च ध्वजाष्टकम् ॥ ६-१५०॥

कटस्य पृष्टं सर्वत्र कारयेत्पटसंवृतम् ।
तत्पटे च लिखेत्सोमं सगणं सवृषं शिवम् ॥ ६-१५१॥

विचित्रपुष्पस्रग्दाम्ना समन्ताद्भूषयेत्कटम् ।
रवकैः किङ्किणीजालैर्घण्टाचामरभूषितैः ॥ ६-१५२॥

महापूजाविशेषैश्च कौतूहलसमन्वितम् ।
वाद्यारम्भोपचारेण मार्गशोभां प्रकल्पयेत् ॥ ६-१५३॥

तद्रथं भ्रामयेद्यत्नाद्राजमार्गेण सर्वतः ।
ततः स्वाश्रममानीय स्थापयेत्तत्समीपतः ॥ ६-१५४॥

महाशब्दं ततः कुर्यात्तालत्रयसमन्वितम् ।
ततस्तुष्णीं स्थिते लोके तच्छान्तिमिह धारयेत् ॥ ६-१५५॥

शिवं तु सर्वजगतः शिवं गोब्राह्मणस्य च ।
शिवमस्तु नृपाणां च तद्भक्तानां जनस्य च ॥ ६-१५६॥

राजा विजयमाप्नोति पुत्रपौत्रैश्च वर्धताम् ।
धर्मनिष्ठश्च भवतु प्रजानां च हिते रतः ॥ ६-१५७॥

कालवर्षी तु पर्जन्यः सस्यसम्पत्तिरुत्तमा ।
सुभिक्षात्क्षेममाप्नोति कार्यसिद्धिश्च जायताम् ॥ ६-१५८॥

दोषाः प्रयान्तु नाशं च गुणाः स्थैर्यं भजन्तु वः ।
बहुक्षीरयुता गावो हृष्टपुष्टा भवन्तु वः ॥ ६-१५९॥

एवं शिवमहाशान्तिमुच्चार्य जगतः क्रमात् ।
अभिवर्ध्य ततः शेषमैश्वरीं सार्वकामिकीम् ॥ ६-१६०॥

शिवमालां समादाय सदासीपरिचारिकः ।
फलैर्भक्षैश्च संयुक्तां गृह्य पात्रीं निवेशयेत् ॥ ६-१६१॥

पात्रीं च धारयेन्मूर्ध्ना सोष्णीषां देवपुत्रकः ।
अलंकृतः शुक्लवासा धार्मिकः सततं शुचिः ॥ ६-१६२॥

ततश्च तां समुत्क्षिप्य पाणिना धारयेद्बुधः ।
प्रब्रूयादपरश्चात्र शिवधर्मस्य भाजकः ॥ ६-१६३॥

तोयं यथा घटीसंस्थमजस्रं क्षरते तथा ।
क्षरते सर्वलोकानां तद्वदायुरहर्निशम् ॥ ६-१६४॥

यदा सर्वं परित्यज्य गन्तव्यमवशैर्ध्रुवम् ।
तदा न दीयते कस्मात्पाथेयार्थमिदं धनम् ॥ ६-१६५॥

कलत्रपुत्रमित्राणि पिता माता च बान्धवाः ।
तिष्ठन्ति न मृतस्यार्थे परलोके धनानि च ॥ ६-१६६॥

नास्ति धर्मसमं मित्रं नास्ति धर्मसमः सखा ।
यतः सर्वैः परित्यक्तं नरं धर्मो ऽनुगच्छति ॥ ६-१६७॥

तस्माद्धर्मं समुद्दिश्य यः शेषामभिवर्धयेत् ।
समस्तपापनिर्मुक्तः शिवलोकं स गच्छति ॥ ६-१६८॥

उपर्युपरि वित्तेन यः शेषामभिवर्धयेत् ।
तस्येयमुत्तमा देया यतश्चान्या न वर्धते ॥ ६-१६९॥

इत्येवं मध्यमां शेषां वर्धयेद्वा कनीयसीम् ।
ततस्तेषां प्रदातव्या सर्वशोकस्य शान्तये ॥ ६-१७०॥

येनोत्तमा गृहीता स्याच्छिवशेषा महीयसी ।
प्रापणीया गृहं तस्य तथैव शिरसा वृता ॥ ६-१७१॥

ध्वजच्छत्रविमानाद्यैर्महावादित्रनिःस्वनैः ।
गृहद्वारं ततः प्राप्तमर्चयित्वा निवेशयेत् ॥ ६-१७२॥

दद्याद्गोत्रकलत्राणां भृत्यानां स्वजनस्य च ।
तर्पयेच्चानतान्(?) भक्त्या वादित्रध्वजवाहकान् ॥ ६-१७३॥

एवमादीयते भक्त्या यः शिवस्योत्तमा गृहे ।
शोभया राजमार्गेण तस्य धर्मफलं शृणु ॥ ६-१७४॥

समस्तपापनिर्मुक्तः समस्तकुलसंयुतः ।
शिवलोकमवाप्नोति सभृत्यपरिचारकः ॥ ६-१७५॥

तत्र दिव्यैर्महाभोगैर्विमानैः सार्वकामिकैः ।
कल्पानां क्रीडते कोटिमन्ते निर्वाणमाप्नुयात् ॥ ६-१७६॥

रथस्य यात्रां यः कुर्यादित्येवमुपशोभया ।
भक्षभोज्यप्रदानैश्च तत्फलं शृनु यत्नतः ॥ ६-१७७॥

अशेषपापनिर्मुक्तः सर्वभृत्यसमन्वितः ।
कुलत्रिंशकमुद्धृत्य सुहृद्भिः स्वजनैः सह ॥ ६-१७८॥

सर्वकामयुतैर्दिव्यैः स्वच्छन्दगमनालयैः ।
महाविमानैः श्रीमद्भिर्दिव्यस्त्रीपरिवारितः ॥ ६-१७९॥

इच्छया क्रीडते भोगैः कल्पकोटिं शिवे पुरे ।
ज्ञानयोगं ततः प्राप्य संसारादवमुच्यते ॥ ६-१८०॥

शिवस्य रथयात्रायामुपवासपरः क्षमी ।
पुरतः पृष्ठतो वापि गच्छंस्तस्य फलं शृणु ॥ ६-१८१॥

अशेषपापनिर्मुक्तः शुद्धः शिवपुरं गतः ।
महारथोपमैर्यानैः कल्पाशीतिं प्रमोद□□□ ॥ ६-१८२॥

ध्वजच्छत्रपताकाभिर्दीपदर्पणचामरैः ।
धूपैर्वितानकलशैरुपशोभा सहस्रशः ॥ ६-१८३॥

गृहीत्वा याति पुरतः स्वेच्छया वा परेच्छया ।

सम्पर्कात्कौतुकाल्लाभाच्छिवलोके व्रजन्ते ते ॥ ६-१८४॥

शिवस्य रथयात्रां तु यः प्रपश्यति भक्तितः ।
प्रसङ्गात्कौतुकाद्वापि ते ऽपि यान्ति शिवं पुरम् ॥ ६-१८५॥

नानायत्नादिशेषान्ते नानाप्रेक्षणकानि च ।
कुर्वीत रथयात्रायां रमते च विभूषिता ॥ ६-१८६॥

ते भोगैर्विविधैर्दिव्यैः शिवासन्ना गणेश्वराः ।
क्रीडन्ति रुद्रभवने कल्पानां विंशतीर्नराः ॥ ६-१८७॥

महता ज्ञानसङ्घेन तस्माच्छिवरथेन च ।
पृथक्जीवा मृता यान्ति शिवलोकं न संशयः ॥ ६-१८८॥

श्रीपर्वते महाकाले वाराणस्यां महालये ।
जल्पेश्वरे कुरुक्षेत्रे केदारे मण्डलेश्वरे ॥ ६-१८९॥

गोकर्णे भद्रकर्णे च शङ्कुकर्णे स्थलेश्वरे ।
भीमेश्वरे सुवर्णाक्षे कालञ्जरवने तथा ॥ ६-१९०॥

एवमादिषु चान्येषु शिवक्षेत्रेषु ये मृताः ।
जीवाश्चराचराः सर्वे शिवलोकं व्रजन्ति ते ॥ ६-१९१॥

प्रयागं कामिकं तीर्थमविमुक्तं तु नैष्ठिकम् ।
श्रीपर्वतं च विज्ञेयमिहामुत्र च सिद्धिदम् ॥ ६-१९२॥

प्रसङ्गेनापि यः पश्येदन्यत्र प्रस्थितः क्वचित् ।
श्रीपर्वतं महापुण्यं सो ऽपि याति शिवं पुरम् ॥ ६-१९३॥

व्रजेद्यः शिवतीर्थानि सर्वपापैः प्रमुच्यते ।
पापयुक्तः शिवज्ञानं प्राप्य निर्वाणमाप्नुयात् ॥ ६-१९४॥

तीर्थस्थानेषु यः श्राद्धं शिवरात्रे प्रयत्नतः ।
कल्पयित्वानुसारेण कालस्य विषुवस्य च ॥ ६-१९५॥

तीर्थयात्रागतं शान्तं हाहाभूतमचेतनम् ।
क्षुत्पिपासातुरं लोके पांसुपादं त्वरान्वितम् ॥ ६-१९६॥

संतर्पयित्वा यत्नेन म्लानलक्ष्मीमिवाम्बुभिः ।
पाद्यासनप्रदानेन कस्तेन पुरुषः समः ॥ ६-१९७॥

अश्नन्ति यावत्तत्पिण्डं तीर्थनिर्धूतकल्मषाः ।
तावद्वर्षसहस्राणि तद्दातास्ते शिवे पुरे ॥ ६-१९८॥

दद्याद्यः शिवसत्त्रार्थं महिषीं सुपयस्विनीम् ।
मोदते स शिवे लोके युगकोटिशतं नरः ॥ ६-१९९॥

आर्ताय शिवभक्ताय दद्याद्यः सुपयस्विनीम् ।
अजामेकां सुपुष्टाङ्गीं तस्य पुण्यफलं शृणु ॥ ६-२००॥

यावत्तद्रोमसंख्यानं तत्प्रसूतिकुलेषु च ।
तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥ ६-२०१॥

मृदुरोमाञ्चितां कृष्णां निवेद्य गुरवे नरः ।
रोम्णि रोम्णि सुवर्णस्य दत्तस्य फलमाप्नुयात् ॥ ६-२०२॥

गजाश्वरथसंयुक्तैर्विमानैः सार्वकामिकैः ।
सानुगः क्रीडते भोगैः कल्पकोटिं शिवे पुरे ॥ ६-२०३॥

निवेद्याश्वतरं पुष्टमदुष्टं गुरवे नरः ।
संगतिं सोपकरणं भोगान्भुङ्क्ते शिवे पुरे ॥ ६-२०४॥

दिव्याश्वयुक्तैः श्रीमद्भिर्विमानैः सार्वकामिकैः ।
कोटिं कोटिं च कल्पानां तदन्ते स्यान्महीपतिः ॥ ६-२०५॥

अपि योजनमात्राय शिबिकां परिकल्पयेत् ।
गुरोः शान्तस्य दान्तस्य तस्य पुण्यफलं शृणु ॥ ६-२०६॥

विमानानां सहस्रेण सर्वकामयुतेन च ।
कल्पकोट्ययुतं साग्रं भोगान्भुङ्क्ते शिवे पुरे ॥ ६-२०७॥

छागं मेषं मयूरं च कुक्कुटं शारिकां शुकम् ।
बालक्रीडनकानेतानित्याद्यानपरानपि ॥ ६-२०८॥

निवेदयित्वा स्कन्दाय तत्सायुज्यमवाप्नुयात् ।
भुक्त्वा तु विपुलान्भोगांस्तदन्ते स्याद्द्विजोत्तमः ॥ ६-२०९॥

मुसलोलूखलाद्यानि गृहोपकरणानि च ।
दद्याच्छिवगृहस्थेभ्यस्तस्य पूण्यफलं शृणु ॥ ६-२१०॥

प्रत्येकं कल्पमेकैकं गृहोपकरणैर्नरः ।
अन्ते दिवि वसेद्भोगैस्तदन्ते च गृही भवेत् ॥ ६-२११॥

खर्जूरतालपत्त्रैर्वा चर्मणा वा सुकल्पितम् ।
दत्त्वा कोट्यासनं वृत्तं शिवलोकमवाप्नुयात् ॥ ६-२१२॥

प्रातर्नीहारवेलायां हेमन्ते शिवयोगिनाम् ।
कृत्वा प्रतापनायाग्निं शिवलोके महीयते ॥ ६-२१३॥

सूर्यायुतप्रभादीप्तैर्विमानैः सार्वकामिकैः ।
कल्पकोटिशतं भोगान्भुक्त्वा स तु महीपतिः ॥ ६-२१४॥

यः प्रान्तरं विदेशं वा गच्छन्तं शिवयोगिनम् ।
भोजयीत यथाशक्त्या शिवलोके महीयते ॥ ६-२१५॥

यश्छत्त्रं धारयेद्ग्रीष्मे गच्छते शिवयोगिने ।
स मृतः पृथिवीं कृत्स्नामेकच्छत्त्रामवाप्नुयात् ॥ ६-२१६॥

यः समुद्धरते मार्गे मात्रोपकरणासनम् ।
शिवयोगप्रवृत्तस्य तस्य पुण्यफलं शृणु ॥ ६-२१७॥

कल्पायुतं नरः साग्रं भुक्त्वा भोगाञ्छिवे पुरे ।
तदन्ते प्राप्नुयाद्राज्यं सर्वैश्वर्यसमन्वितम् ॥ ६-२१८॥

अभ्यङ्गोद्वर्तनं स्नानमार्तस्य शिवयोगिनः ।
कृत्वाप्नोति महाभोगान्कल्पाञ्छिवपुरे नरः ॥ ६-२१९॥

अपनीय समुच्छिष्टं भक्तितः शिवयोगिनाम् ।
दशधेनुप्रदानस्य फलमाप्नोति मानवः ॥ ६-२२०॥

पञ्चगव्यसमं ज्ञेयमुच्छिष्टं शिवयोगिनाम् ।
तद्भुक्त्वा लभते शुद्धिं महतः पातकादपि ॥ ६-२२१॥

नारी च भुक्त्वा सत्पुत्रं कुलाधारं गुणान्वितम् ।

राज्ययोग्यं धनाढ्यं च प्राप्नुयाद्धर्मतत्परम् ॥ ६-२२२॥

यश्च यां शिवयज्ञाय गृहस्थः परिकल्पयेत् ।
शिवभक्तो ऽस्य महतः परमं फलमाप्नुयात् ॥ ६-२२३॥

शिवोमां च प्रयत्नेन भक्त्याब्दं यो ऽनुपालयेत् ।
गवां लक्षप्रदानस्य सम्पूर्णं फलमाप्नुयात् ॥ ६-२२४॥

प्रातः प्रदद्यात्सघृतं सुकृतं बालपिण्डकम् ।
दूर्वां च बालवत्सानां(?) तस्य पुण्यफलं शृणु ॥ ६-२२५॥

यावत्तद्बालवत्सानां पानाहारं प्रकल्पयेत् ।
तावदष्टायुतान्पूर्वैर्भोगान्भुङ्क्ते शिवे पुरे ॥ ६-२२६॥

विधवानाथवृद्धानां प्रदद्याद्यः प्रजीवनम् ।
आभूतस्सम्प्लवं यावच्छिवलोके महीयते ॥ ६-२२७॥

दद्याद्यः सर्वजन्तूनामाहारमनुयत्नतः ।
त्रिः पृथ्वीं रत्नसम्पूर्णां यद्दत्त्वा तत्फलं लभेत् ॥ ६-२२८॥

विनयव्रतदानानि यानि सिद्धानि लोकतः ।
तानि तेनैव विधिना शिवमन्त्रेण कल्पयेत् ॥ ६-२२९॥

निवेदयीत रुद्राय रुद्राण्याः षण्मुखस्य च ।
प्राप्नुयाद्विपुलान्भोगान्दिव्याञ्छिवपुरे नरः ॥ ६-२३०॥

पुनर्यः कर्तरीं दद्यात्केशक्लेशापनुत्तये ।
सर्वक्लेशविनिर्मुक्तः शिवलोके सुखी भवेत् ॥ ६-२३१॥

नासिकाशोधनं दद्यात्संदंशं शिवयोगिने ।
वर्षकोटिं महाभोगैः शिवलोके महीयते ॥ ६-२३२॥

नखच्छेदनकं दत्त्वा शिवलोके महीयते ।
वर्षलक्षं महाभोगैः शिवलोके महीयते ॥ ६-२३३॥

दत्त्वाञ्जनशलाकां वा लोहाद्यां शिवयोगिने ।
भोगाञ्छिवपुरे प्राप्य ज्ञानचक्षुरवाप्नुयात् ॥ ६-२३४॥

कर्णशोधनकं दत्त्वा लोहाद्यं शिवयोगिने ।
वर्षकोटिं महाभोगैः शिवलोके महीयते ॥ ६-२३५॥

दद्याद्यः शिवभक्ताय सूचीं कौपीनशोधनीम् ।
वर्षलक्षं स लक्षार्धं शिवलोके महीयते ॥ ६-२३६॥

निवेद्य शिवयोगिभ्यः सूचिकं सूत्रसंयुतम् ।
वर्षलक्षं महाभोगैः क्रीडते स शिवे पुरे ॥ ६-२३७॥

दद्याद्यः शिवयोगिभ्यः सुकृतां पत्रवेधनीम् ।
वर्षलक्षं महाभोगैः शिवलोके महीयते ॥ ६-२३८॥

दद्याद्यः पुस्तकादीनां सर्वकार्यार्थकर्तृकाम् ।
पञ्चलक्षं महाभोगैर्मोदते स शिवे पुरे ॥ ६-२३९॥

शमीन्धनतृणादीनां दद्यात्तच्छेदनं च यः ।
क्रीडते स शिवे लोके वर्षलक्षचतुष्टयम् ॥ ६-२४०॥

शिवाश्रमोपभोगाय लोहोपकरणं महत् ।
यः प्रदद्याग्कुठाराद्यं तस्य पुण्यफलं शृणु ॥ ६-२४१॥

यावत्तत्फलसंख्यानं लोहोपकरणे भवेत् ।
तावन्ति वर्षलक्षाणि शिवलोके महीयते ॥ ६-२४२॥

शिवायतनवित्तानां रक्षार्थं यः प्रयच्छति ।
धनुःखड्गायुधादीनि तस्य पुण्यफलं शृणु ॥ ६-२४३॥

एकैकस्मिन्परिज्ञेयमायुधे चापि वै फलम् ।
वर्षकोट्यष्टकं भोगैः शिवलोके महीयते ॥ ६-२४४॥

यः स्वात्मभोगभृत्यर्थं कुसुमानि निवेदयेत् ।
शिवाय गुरवे वापि तस्य पुण्यफलं शृणु ॥ ६-२४५॥

यावदन्योऽन्यसंबन्धास्तस्यांशाः परिकीर्तिताः ।
वर्षलक्षं स तावच्च शिवलोके प्रमोदते ॥ ६-२४६॥

नष्टापहृतमन्विष्य पुनर्वित्तं निवेदयेत् ।
शिवात्मकं शिवायैव तस्य पुण्यफलं शृणु ॥ ६-२४७ ॥

यावच्छिवाय तद्वित्तं प्राङ्निवेद्य फलं स्मृतम् ।
नष्टमानीय तद्भूयः पुण्यं शतगुणं लभेत् ॥ ६-२४८॥

देवद्रव्यं हृतं नष्टमन्वेष्यमपि यत्नतः ।
न प्राप्नोति तदा तस्य प्राप्नुयाद्द्विगुणं फलम् ॥ ६-२४९॥

ताम्रकुम्भकटाहाद्यं यः शिवाय निवेदयेत् ।
शिवात्मकं शिवायैव तस्य पुण्यफलं शृणु ॥ ६-२५०॥

यावच्छिवाय तद्वित्तं प्राङ्निवेद्य फलं स्मृतम् ।
नष्टमानीय तद्भूयः पुण्यं शतगुणं लभेत् ॥ ६-२५१॥

स्नानसत्त्रोपभोगाय तस्य पुण्यफलं शृणु ।
यावत्तत्फलसंख्यानं ताम्रोपकरणे स्थितम् ॥ ६-२५२॥

पले पले वर्षकोटिं मोदते स शिवे पुरे ।
यः पत्त्रपुष्पवस्तूनां दद्यादाधारभाजनम् ॥ ६-२५३॥

तद्वस्तुदातुर्यत्पुण्यं तत्पुण्यं सकलं भवेत् ।
दत्त्वोपकरणं किंचिदपि यो वित्तमर्थिनाम् ॥ ६-२५४॥

यद्वस्तु कुरुते तेन तत्प्रदानफलं लभेत् ।
यः शौचपीतवस्त्राणि क्षाराद्यैः शिवयोगिनाम् ॥ ६-२५५॥

स पापमलनिर्मुक्तः शिवलोकमवाप्नुयात् ।
यः पुष्पपट्टसंयुक्तं पटगर्भं च कम्बलम् ॥ ६-२५६॥

प्रदद्याच्छिवयोगिभ्यस्तस्य पुण्यफलं शृणु ।
तेषां च वस्त्रतन्तूनां यावत्संख्या विधीयते ॥ ६-२५७॥

तावद्वर्षसहस्राणि भोगान्भुङ्क्ते शिवे पुरे ।
श्लक्ष्णवस्त्राणि शुक्लानि दद्याद्यः शिवयोगिने ॥ ६-२५८॥

चित्रवस्त्राणि तद्भक्त्या तस्य पुण्यफलं शृणु ।
यावत्तत्सूक्ष्मवस्त्राणां तन्तुसंख्या विधीयते ॥ ६-२५९॥

तावद्युगानि संभोगैः शिवलोके महीयते ।

शङ्खपात्रं तु विस्तीर्णं भाण्डं वापि सुशोभनम् ॥ ६-२६०॥

प्रदद्याच्छिवयोगिभ्यस्तस्य पुण्यफलं शृणु ।
दिव्यं विमानमारूढः सर्वकामसमन्वितम् ॥ ६-२६१॥

कल्पकोट्ययुतं साग्रं शिवलोके महीयते ।
शुक्त्यादीनि च पात्राणि शोभनान्यमलानि च ॥ ६-२६२॥

निवेद्य शिवयोगिभ्यः शङ्खार्धेन फलं लभेत् ।
स्फाटिकानां च पात्राणां शङ्खतुल्यफलं स्मृतम् ॥ ६-२६३॥

शैलजानां तदर्धेन पात्राणां च तदर्धकम् ।
तालखर्जूरपात्राणां वंशजानां निवेदने ॥ ६-२६४॥

अन्येषामेवमादीनां पुण्यं वाक्ष्र्यार्धसंमितम् ।
वंशजार्धसमं पुण्यं फलपात्रनिवेदने ॥ ६-२६५॥

नानापर्णपुटाणां च साराणां वा फलार्धकम् ।
यस्ताम्रकांस्यपात्राणि शोव्हनान्यमलानि च ॥ ६-२६६॥

स्नानभोजनपानार्थं दद्याद्यः शिवयोगिने ।
ताम्रां कांसीं त्रिलोहीं वा यः प्रदद्यात्त्रिपादिकाम् ॥ ६-२६७॥

भोजने भोजनाधारं गुरवे तत्फलं शृणु ।
यावत्तत्पलसंख्यानं त्रिपाद्या भोजनेषु च ॥ ६-२६८॥

तावद्युगसहस्राणि भोगान्भुङ्क्ते शिवे पुरे ।
लोहं त्रिपादिकं दत्त्वा सत्कृत्वा शिवयोगिने ॥ ६-२६९॥

दशकल्पान्महाभोगैर्नरः शिवपुरे वसेत् ।
यः प्रदद्यात्त्रिविष्टम्भं भिक्षापात्रसमाश्रयम् ॥ ६-२७०॥

वंशजं दारुजं वापि तस्य पुण्यफलं शृणु ।
दिव्यस्त्रीभोगसम्पन्नो विमाने महति स्थितः ॥ ६-२७१॥

चतुर्युगसहस्रं तु भोगान्भुङ्क्ते शिवे पुरे ।
भिक्षापात्रमुखाच्छादम्वस्त्रपर्णादिकल्पितम् ॥ ६-२७२॥

दत्त्वा शिवपुरे भोगान्कल्पमेकं वसेन्नरः ।
संश्रयं यः प्रदद्याच्च भिक्षापात्रे कमण्डलौ ॥ ६-२७३॥

कल्पितं वस्त्रसूत्राद्यैस्तस्य पुण्यफलं शृणु ।
तद्वस्त्रपूततन्तूनां संख्या यावद्विधीयते ॥ ६-२७४॥

तावद्वर्षसहस्राणि रुद्रलोके महीयते ।
सूत्रवल्कलवालैर्वा शिक्यभाण्डसमाश्रयम् ॥ ६-२७५॥

यः कृत्वा दामनीयोक्त्रं प्रग्रहं रज्जुमेव वा ।
एवमादीनि चान्यानि वस्तूनि विनिवेदयेत् ॥ ६-२७६॥

शिवगोष्ठोपयोगार्थं तस्य पुण्यफलं शृणु ।
यावत्तद्रज्जुसंख्यानं प्रदद्याच्छिवगोकुले ॥ ६-२७७॥

तावच्चतुर्युगं देही शिवलोके महीयते ।
यथा यथा प्रियं वस्त्रं शोभनं च यथा यथा ॥ ६-२७८ ॥

तथा तथा महापुण्यं तद्दानादुत्तरोत्तरम् ।
यः पन्थानं दिशेत्पृष्टं प्रणष्टं च गवादिकं ॥ ६-२७९॥

स गोदानसमं पुण्यं प्रज्ञासौख्यं च विन्दति ।
कृत्वोपकारमार्तानां स्वर्गं याति न संशयः ॥ ६-२८०॥

अपि कण्टकमुद्धृत्य किमुतान्यं महागुणम्(?) ।
अन्नपानौषधीनां च यः प्रदातारमुद्दिशेत् ॥ ६-२८१॥

आर्तानां तस्य विज्ञेयं दातुस्तत्सदृशं फलम् ।
शिवाय तस्य संरुद्धं कर्म तिष्ठति यद्विना ॥ ६-२८२॥

तदल्पमपि यज्ञाङ्गं दत्त्वा यज्ञफलं लभेत् ।
अपि काशकुशं सूत्रं गोमयं समिदिन्धनम् ॥ ६-२८३॥

शिवयज्ञोपयोगार्थं प्रवक्ष्यामि समासतः ।
सर्वेषां शिवभक्तानां दद्याद्यत्किंचिदादरात् ।
दत्त्वा यज्ञफलं विद्यात्किमु तद्वस्तुदानतः ॥ ६-२८४॥

॥ इति शिवोपनिषदि फलोपकरणप्रदानाध्यायः षष्ठः ॥

अथ स्वर्गापवर्गार्थे प्रवक्ष्यामि समासतः ।
सर्वेषां शिवभक्तानां शिवाचारमनुत्तमम् ॥ ७-१॥

शिवः शिवाय भूतानां यस्माद्दानं प्रयच्छति ।
गुरुमूर्तिः स्थितस्तस्मात्पूजयेत्सततं गुरुम् ॥ ७-२॥

नालक्षणे यथा लिङ्गे सांनिध्यं कल्पयेच्छिवः ।
अल्पागमे गुरौ तद्वत्सांनिध्यं न प्रकल्पयेत् ॥ ७-३॥

शिवज्ञानार्थतत्त्वज्ञः प्रसन्नमनसं गुरुम् ।
शिवः शिवं समास्थाय ज्ञानं वक्ति न हीतरः ॥ ७-४॥

गुरुं च शिववद्भक्त्या नमस्कारेण पूजयेत् ।
कृताञ्जलिस्त्रिसंध्यं च भूमिविन्यस्तमस्तकः ॥ ७-५॥

न विविक्तमनाचान्तम्(?) चङ्क्रमन्तं तथाकुलम् ।
समाधिस्थं व्रजन्तं च नमस्कुर्याद्गुरुं बुधः ॥ ७-६॥

व्याख्याने तत्समाप्तौ च सम्प्रश्ने स्नानभोजने ।
भुक्त्वा च शयने स्वप्ने नमस्कुर्यात्सदा गुरुम् ॥ ७-७॥

ग्रामान्तरमभिप्रेप्सुर्गुरोः कुर्यात्प्रदक्षिणम् ।
सार्वाङ्गिकप्रणामं च पुनः कुर्यात्तदागतः ॥ ७-८॥

पर्वोत्सवेषु सर्वेषु दद्याद्गन्धपवित्रकम् ।
शिवज्ञानस्य चारम्भे प्रवासगमनागतौ ॥ ७-९॥

शिवधर्मव्रतारम्भे तत्समाप्तौ च कल्पयेत् ।
प्रसादनाय कुपितो विजित्य च रिपुं तथा ॥ ७-१०॥

पुण्याहे ग्रहशान्तौ च दीक्षायां च सदक्षिणम् ।
आवार्य पदसम्प्राप्तौ पवित्रे चोपविग्रहे ॥ ७-११॥

उपानच्छत्त्रशयनं वस्त्रमासनभूषणम् ।
पात्रदण्डाक्षसूत्रं वा गुरुसक्तं न धारयेत् ॥ ७-१२॥

हास्यनिष्ठीवनास्फोटमुच्चभाष्यविजृम्भणम् ।
पादप्रसारणं गतिं न कुर्याद्गुरुसंनिधौ ॥ ७-१३॥

हीनान्नपानवस्त्रः स्यान्नीचशय्यासनो गुरोः ।
न यथेष्टश्च संतिष्ठेत्कलहं च विवर्जयेत् ॥ ७-१४॥

प्रतिवाते ऽनुवाते वा न तिष्ठेद्गुरुणा सह ।
असंश्रये च सततं न किंचित्कीर्तयेद्गुरोः ॥ ७-१५॥

अन्यासक्तो न भुञ्जानो न तिष्ठन्नपराङ्मुखः ।
न शयनो न चासीनः संभास्येद्गुरुणा सह ॥ ७-१६॥

दृष्ट्वैव गुरुमायान्तमुत्तिष्ठेद्दूरतस्त्वरम् ।
अनुज्ञातश्च गुरुणा संविशेच्चानुपृष्ठतः ॥ ७-१७॥

न कण्ठं प्रावृतं कुर्यान्न च तत्रावसक्तिकाम् ।
न पादधावनस्नानं यत्र पश्येद्गुरुः स्थितः ॥ ७-१८॥

न दन्तधावनाभ्यङ्गमायामोद्वर्तनक्रियाः ।
उत्सर्गपरिधानं च गुरोः कुर्वीत पश्यतः ॥ ७-१९॥

गुरुर्यदर्पयेत्किंचिद्गृहासन्नं तदञ्जलौ ।
पात्रे वा पुरतः शिष्यस्तद्वक्त्रमभिवीक्षयन् ॥ ७-२०॥

यदर्पयेद्गुरुः किंचि तन्नम्रः पुरतः स्थितः ।
पाणिद्वयेन गृह्णीयत्स्थापयेत्तच्च सुस्थितम् ॥ ७-२१॥

न गुरोः कीर्तयेन्नाम परोऽक्षमपि केवलम् ।
समानसंज्ञमन्यं वा नाह्वयीत तदाख्यया ॥ ७-२२॥

स्वगुरुस्तद्गुरुश्चैव यदि स्यातां समं क्वचित् ।
गुरोर्गुरुस्तयोः पूज्यः स्वगुरुश्च तदाज्ञया ॥ ७-२३॥

अनिवेद्य न भुञ्जीत भुक्त्वा चास्य निवेदयेत् ।
नाविज्ञाप्य गुरुं गच्छेद्बहिः कार्येण केनचित् ॥ ७-२४॥

गुर्वाज्ञया कर्म कृत्वा तत्समाप्तौ निवेदयेत् ।

कृत्वा च नैत्यकं सर्वमधीयीताज्ञया गुरोः ॥ ७-२५॥

मृद्भस्मगोमयजलं पत्रपुष्पेन्धनं समित् ।
पर्याप्तमष्टकं ह्येतद्गुर्वर्थं तु समाहरेत् ॥ ७-२६॥

भैषज्याहारपात्राणि वस्त्रशय्यासनं गुरोः ।
आनयेत्सर्वयत्नेन प्रार्थयित्वा धनेश्वरान् ॥ ७-२७॥

गुरोर्न खण्डयेदाज्ञामपि प्राणान्परित्यजेत् ।
कृत्वाज्ञां प्राप्नुयान्मुक्तिं लङ्घयन्नरकं व्रजेत् ॥ ७-२८॥

पर्यटेत्पृथिवीं कृत्स्नां सशैलवनकाननाम् ।
गुरुभैषज्यसिद्ध्यर्थमपि गच्छेद्रसातलम् ॥ ७-२९॥

यदादिशेद्गुरुः किंचित्तत्कुर्यादविचारतः ।
अमीमांस्या हि गुरवः सर्वकार्येषु सर्वथा ॥ ७-३०॥

नोत्थापयेत्सुखासीनं शयानं न प्रबोधयेत् ।
आसीनो गुरुमासीनमभिगच्छेत्प्रतिष्ठितम् ॥ ७-३१॥

पथि प्रयान्तं यान्तं च यत्नाद्विश्रमयेद्गुरुम् ।
क्षित्पिपासातुरं स्नातं ज्ञात्वा शक्तं च भोजयेत् ॥ ७-३२॥

अभ्यङ्गोद्वर्तनं स्नानं भोजनष्ठीवमार्जनम् ।
गात्रसंवाहनं रात्रौ पादाभ्यङ्गं च यत्नतः ॥ ७-३३॥

प्रातः प्रसाधनं दत्त्वा कार्यं संमार्जनाञ्जनम् ।
नानापुष्पप्रकरणं श्रीमद्व्याख्यानमण्डपे ॥ ७-३४॥

स्थाप्यासनं गुरोः पूज्यं शिवज्ञानस्य पुस्तकम् ।
तत्र तिष्ठेत्प्रतीक्षंस्तद्गुरोरागमनं क्रमात् ॥ ७-३५॥

गुरोर्निन्दापवादं च श्रुत्वा कर्णौ पिधापयेत् ।
अन्यत्र चैव सर्पेत्तु निगृह्णीयादुपायतः ॥ ७-३६॥

न गुरोरप्रियं कुर्यात्पीडितस्तारितोऽपि वा ।
नोच्चारयेच्च तद्वाक्यमुच्चार्य नरकं व्रजेत् ॥ ७-३७॥

गुरुरेव पिता माता गुरुरेव परः शिवः ।
यस्यैव निश्चितो भावस्तस्य मुक्तिर्न दूरतः ॥ ७-३८॥

आहाराचारधर्माणां यत्कुर्याद्गुरुरीश्वरः ।
तथैव चानुकुर्वीत नानुयुञ्जीत कारणम् ॥ ७-३९॥

यज्ञस्तपांसि नियमात्तानि वै विविधानि च ।
गुरुवाक्ये तु सर्वाणि सम्पद्यन्ते न संशयः ॥ ७-४०॥

अज्ञानपङ्कनिर्मग्नं यः समुद्धरते जनम् ।
शिवज्ञानात्महस्तेन कस्तं न प्रतिपूजयेत् ॥ ७-४१॥

इति यः पूजयेन्नित्यं गुरुमूर्तिस्थमीश्वरम् ।
सर्वपापविनिर्मुक्तः प्राप्नोति परमं पदम् ॥ ७-४२॥

स्नात्वाम्भसा भस्मना वा शुक्लवस्त्रोपवीतवान् ।
दूर्वागर्भस्थितं पुष्पं गुरुः शिरसि धारयेत् ॥ ७-४३॥

रोचनालभनं कुर्याद्धूययेदात्मनस्तनुम् ।
अङ्गुलीयाक्षसूत्रं च कर्णमात्रे च धारयेत् ॥ ७-४४॥

गुरुरेवंविधः श्रीमान्नित्यं तिष्ठेत्समाहितः ।
यस्माज्ज्ञानोपदेशार्थं गुरुरास्ते सदाशिवः ॥ ७-४५॥

धारयेत्पादुके नित्यं मृदुवर्मप्रकल्पिते ।
प्रगृह्य दण्डं छत्त्रं वा पर्यटेदाश्रमाद्बहिः ॥ ७-४६॥

न भूमौ विन्यसेत्पादमन्तर्धानं विना गुरुः ।
कुशपादकमाक्रम्य तर्पणार्थं प्रकल्पयेत् ॥ ७-४७॥

पादस्थानानि पत्त्राद्यैः कृत्वा देवगृहं विशेत् ।
पात्रास्तरितपादश्च(?) नित्यं भुञ्जीत वाग्यतः ॥ ७-४८॥

न पादौ धावयेत्कांस्ये लोहे वा परिकल्पिते ।
शौचयेत्तृणगर्भायां द्वितीयायां तथाचमेत् ॥ ७-४९॥

न रक्तमुल्बणं वस्त्रं धारयेत्कुसुमानि च ।
न बहिर्गन्धमाल्यानि वासांसि मलिनानि च ॥ ७-५०॥

केशास्थीनि कपालानि कार्पासास्थितुषाणि च ।
अमेध्याङ्गारभस्मानि नाधितिष्ठेद्रजांसि च ॥ ७-५१॥

न च लोष्टं विमृद्गीयान्न च छिन्द्यान्नखैस्तृणम् ।
न पत्त्रपुष्पमूल्यानि वंशमङ्गलकाष्ठिताम् ॥ ७-५२॥

एवमादीनि चान्यानि पाणिभ्यां न च मर्दयेत् ।
न दन्तखादनं कुर्याद्रोमाण्युत्पाटयेन्न च ॥ ७-५३॥

न पद्भ्यामुल्लिखेद्भूमिं लोष्टकाष्ठैः करेण वा ।
न नखांश्च नखैर्विद्यान्न कण्डूयेन्नखैस्तनुम् ॥ ७-५४॥

मुहुर्मुहुः शिरः श्मश्रु न स्पृशेत्करजैर्बुधः ।
न लिक्षाकर्षणं कुर्यादात्मनो वा परस्य वा ॥ ७-५५॥

सौवर्ण्यरौप्यताम्रैश्च शृङ्गदन्तशलाकया ।
देहकण्डूयनं कार्यं वंशकाष्ठीकवीरणैः(?) ॥ ७-५६॥

न विचित्तं प्रकुर्वीत दिशश्चैवावलोकयन् ।
न शोकार्तश्च संतिष्ठेद्धृत्वा पाणौ कपोलकम् ॥ ७-५७॥

न पाणिपादवाक्चक्षुः- श्रोत्रशिश्नगुदोदरैः ।
चापलानि न कुर्वीत स सर्वार्थमवाप्नुयात् ॥ ७-५८॥

न कुर्यात्केनचिद्वैरमध्रुवे जीविते सति ।
लोककौतूहलं पापं संध्यां च परिवर्जयेत् ॥ ७-५९॥

न कुद्वारेण वेश्मानि नगरं ग्राममाविशेत् ।
न दिवा प्रावृतशिरा रात्रौ प्रावृत्य पर्यटेत् ॥ ७-६०॥

नातिभ्रमणशीलः स्यान्न विशेच्च गृहाद्गृहम् ।
न चाज्ञानमधीयीत शिवज्ञानं समभ्यसेत् ॥ ७-६१॥

शिवज्ञानं परं ब्रह्म तदारभ्य न संत्यजेत् ।
ब्रह्मासाध्य च यो गच्छेद्ब्रह्महा स प्रकीर्तितः ॥ ७-६२॥

कृताञ्जलिः स्थितः शिष्यो लघुवस्त्रमुदङ्मुखः ।

शिवमन्त्रं समुच्चार्य प्राङ्मुखो ऽध्यापयेद्गुरुः ॥ ७-६३॥

नागदन्तादिसंभूतं चतुरश्रं सुशोभनम् ।
हेमरत्नचितं वापि गुरोरासनमुत्तमम् ॥ ७-६४॥

न शुश्रूषार्थकामाश्च न च धर्मः प्रदृश्यते ।
न भक्तिर्न यशः क्रौर्यं न तमध्यापयेद्गुरुः ॥ ७-६५॥

देवाग्निगुरुगोष्ठीषु व्याख्याध्ययनसंसदि ।
प्रश्ने वादे ऽनृते ऽशौचे दक्षिणं बाहुमुद्धरेत् ॥ ७-६६॥

वशे सततनम्रः स्यात्संहृत्याङ्गानि कूर्मवत् ।
तत्संमुखं च निर्गच्छेन्नमस्कारपुरस्सरः ॥ ७-६७॥

देवाग्निगुरुविप्राणां न व्रजेदन्तरेण तु ।
नार्पयेन्न च गृह्णीयात्किंचिद्वस्तु तदन्तरा ॥ ७-६८॥

न मुखेन धमेदग्निं नाधःकुर्यान्न लङ्घयेत् ।
न क्षिपेदशुचिं वह्नौ न च पादौ प्रतापयेत् ॥ ७-६९॥

तृणकाष्ठादिगहने जन्तुभिश्च समाकुले ।
स्थाने न दीपयेदग्निं दीप्तं चापि ततः क्षिपेत् ॥ ७-७०॥

अग्निं युगपदानीय धारयेत प्रयत्नतः ।
ज्वलन्तं न प्रदीपं च स्वयं निर्वापयेद्बुधः ॥ ७-७१॥

शिवव्रतधरं दृष्ट्वा समुत्थाय सदा द्रुतम् ।
शिवो ऽयमिति संकल्प्य हर्षितः प्रणमेत्ततः ॥ ७-७२॥

भोगान्ददाति विपुलान्लिङ्गे सम्पूजितः शिवः ।
अग्नौ च विविधां सिद्धिं गुरौ मुक्तिं प्रयच्छति ॥ ७-७३॥

मोक्षार्थं पूजयेत्तस्माद्गुरुमूर्तिस्थमीश्वरम् ।
गुरुभक्त्या लभेज्ज्ञानं ज्ञानान्मुक्तिमवाप्नुयात् ॥ ७-७४॥

सर्वपर्वसु यत्नेन ह्येषु सम्पूजयेच्छिवम् ।
कुर्यादायतने शोभां गुरुस्थानेषु सर्वतः ॥ ७-७५॥

नरद्वयोच्छ्रिते पीठे सर्वशोभासमन्विते ।
संस्थाप्य मणिजं लिङ्गं स्थाने कुर्याज्जगद्धितम् ॥ ७-७६॥

अन्नपानविशेषैश्च नैवेद्यमुपकल्पयेत् ।
भोजयेद्व्रतिनश्चात्र स्वगुरुं च विशेषतः ॥ ७-७७॥

पूजयेच्च शिवज्ञानं वाचयीत च पर्वसु ।
दर्शयेच्छिवभक्तेभ्यः सत्पूजां परिकल्पिताम् ॥ ७-७८॥

प्रियं ब्रूयात्सदा तेभ्यः प्रदेयं चापि शक्तितः ।
एवं कृते विशेषेण प्रसीदति महेश्वरः ॥ ७-७९॥

छिन्नं भिन्नं मृतं नष्टं वर्धते नास्ति केवलम् ।
इत्याद्यान्न वदेच्छब्दान्साक्षाद्ब्रूयात्तु मङ्गलम् ॥ ७-८०॥

अधेनुं धेनुमित्येव ब्रूयाद्भद्रमभद्रकम् ।
कपालं च भगालं स्यात्परमं मङ्गलं वदेत् ॥ ७-८१॥

ऐन्द्रं धनुर्मणिधनुर्दाहकाष्ठादि चन्दनम् ।
स्वर्यातं च मृतं ब्रूयाच्छिवीभूतं च योगिनम् ॥ ७-८२॥

द्विधाभूतं वदेच्छिन्नं भिन्नं च बहुधा स्थितम् ।
नष्टमन्वेषणीयं च रिक्तं पूर्णाभिवर्धितम् ॥ ७-८३॥

नास्तीति शोभनं सर्वमाद्यमङ्गाभिवर्धनम् ।
सिद्धिमद्ब्रूहि गच्छन्तं सुसं ब्रूयात्प्रवर्धितम् ॥ ७-८४॥

न म्लेच्छमूर्खपतितैः क्रूरैः संतापवेदिभिः ।
दुर्जनैरवलिप्तैश्च क्षुद्रैः सह न संवदेत् ॥ ७-८५॥

नाधार्मिकनृपाक्रान्ते न दंशमशकावृते ।
नातिशीतजलाकीर्णे देशे रोगप्रदे वसेत् ॥ ७-८६॥

नासनं शयनं पानं नमस्काराभिवादनम् ।
सोपानत्कः प्रकुर्वीत शिवपुस्तकवाचनम् ॥ ७-८७॥

आचार्यं दैवतं तीर्थमुद्धृतोदं मृदं दधि ।
वटमश्वत्थकपिलां दीक्षितोदधिसंगमम् ॥ ७-८८॥

यानि चैषां प्रकाराणि मङ्गलानीह कानिचित् ।
शिवायेति नमस्कृत्वा प्रोक्तमेतत्प्रदक्षिणम् ॥ ७-८९॥

उपानच्छत्त्रवस्त्राणि पवित्रं करकं स्रजम् ।
आसनं शयनं पानं धृतमन्यैर्न धारयेत् ॥ ७-९०॥

पालाशमासनं शय्यां पादुके दन्तधावनम् ।
वर्जयेच्चापि निर्यासं रक्तं न तु समुद्भवम् ॥ ७-९१॥

संध्यामुपास्य कुर्वीत नित्यं देहप्रसाधनम् ।
स्पृशेद्वन्देच्च कपिलां प्रदद्याच्च गवां हितम् ॥ ७-९२॥

यः प्रदद्याद्गवां सम्यक्फलानि च विशेषतः ।
क्षेत्रमुद्दामयेच्चापि तस्य पुण्यफलं शृणु ॥ ७-९३॥

यावत्तत्पत्त्रकुसुम- कन्दमूलफलानि च ।
तावद्वर्षसहस्राणि शिवलोके महीयते ॥ ७-९४॥

कृशरोगार्तवृद्धानां त्यक्तानां निर्जने वने ।
क्षुत्पिपासातुराणां च गवां विह्वलचेतसाम् ॥ ७-९५॥

नीत्वा यस्तृणतोयानि वने यत्नात्प्रयच्छति ।
करोति च परित्राणं तस्य पुण्यफलं शृणु ॥ ७-९६॥

कुलैकविंशकोपेतः पत्नीपुत्रादिसंयुतः ।
मित्रभृत्यैरुपेतश्च श्रीमच्छिवपुरं व्रजेत् ॥ ७-९७॥

तत्र भुक्त्वा महाभोगान्विमानैः सार्वकामिकैः ।
स महाप्रलयं यावत्तदन्ते मुक्तिमाप्नुयात् ॥ ७-९८॥

गोब्राह्मणपरित्राणं सकृत्कृत्वा प्रयत्नतः ।
मुच्यते पञ्चभिर्घोरैर्महद्भिः पातकैर्द्रुतम् ॥ ७-९९॥

अहिंसा सत्यमस्तेयं ब्रह्मचर्यमकल्कता ।
अक्रोधो गुरुशुश्रूषा शौचं संतोषमार्जवम् ॥ ७-१००॥

अहिंसाद्या यमाः पञ्च यतीनां परिकीर्तिताः ।

अक्रोधाद्याश्च नियमाः सिद्धिवृद्धिकराः स्मृताः ॥ ७-१०१॥

दशलाक्षणिको धर्मः शिवाचारः प्रकीर्तितः ।
योगीन्द्राणां विशेषेण शिवयोगप्रसिद्धये ॥ ७-१०२॥

न विन्दति नरो योगं पुत्रदारादिसंगतः ।
निबद्धः स्नेहपाशेन मोहस्तम्भबलीयसा ॥ ७-१०३॥

मोहात्कुटुम्बसंसक्तस्तृष्णया शृङ्खलीकृतः ।
बालैर्बद्धस्तु लोको ऽयं मुसलेनाभिहन्यते ॥ ७-१०४॥

इमे बालाः कथं त्याज्या जीविष्यन्ति मया विना ।
मोहाद्धि चिन्तयत्येवं परमार्थौ न पश्यति ॥ ७-१०५॥

सम्पर्कादुदरे न्यस्तः शुक्रबिन्दुरचेतनः ।
स पित्रा केन यत्नेन गर्भस्थः परिपालितः ॥ ७-१०६॥

कर्कशाः कठिना भक्षा जीर्यन्ते यत्र भक्षिताः ।
तस्मिन्नेवोदरे शुक्रं किं न जीर्यति भक्ष्यवत् ॥ ७-१०७॥

येनैतद्योजितं गर्भे येन चैव विवर्धितम् ।
तेनैव निर्गत् भूयः कर्मणा स्वेन पाल्यते ॥ ७-१०८॥

न कश्चित्कस्यचित्पुत्रः पिता माता न कस्यचित् ।
यत्स्वयं प्राक्तनं कर्म पिता मातेति तत्स्मृतम् ॥ ७-१०९॥

येन यत्र कृतं कर्म स तत्रैव प्रजायते ।
पितरौ चास्य दासत्वं कुरुतस्तत्प्रचोदितौ ॥ ७-११०॥

न कश्चित्कस्यचिच्छक्तः कर्तुं दुःखं सुखानि च ।
करोति प्राक्तनं कर्म मोहाल्लोकस्य केवलम् ॥ ७-१११॥

कर्मदायादसंबन्धादुपकारः परस्परम् ।
दृश्यते नापकारश्च मोहेनात्मनि मन्यते ॥ ७-११२॥

ईश्वराधिष्ठितं कर्म फलतीह शुभाशुभम् ।
ग्रामस्वामिप्रसादेन सुकृतं कर्षणं यथा ॥ ७-११३॥

द्वयं देवत्वमोक्षाय ममेति न ममेति च ।
ममेति बध्यते जन्तुर्न ममेति विमुच्यते ॥ ७-११४॥

द्व्यक्षरं च भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम् ।
ममेति द्व्यक्षरं मृत्युस्त्र्यक्षरं न ममेति च ॥ ७-११५॥

तस्मादात्मन्यहंकारमुत्सृज्य प्रविचारतः ।
विधूयाशेषसङ्गांश्च मोक्षोपायं विचिन्तयेत् ॥ ७-११६॥

ज्ञानाद्योगपरिक्लेशं कुप्रावरणभोजनम् ।
कुचर्यां कुनिवासं च मोक्षार्थी न विचिन्तयेत् ॥ ७-११७॥

न दुःखेन विना सौख्यं दृश्यते सर्वदेहिनाम् ।
दुःखं तन्मात्रकं ज्ञेयं सुखमानन्त्यमुत्तमम् ॥ ७-११८॥

सेवायां पाशुपाल्ये च वानिज्ये कृषिकर्मणि ।
तुल्ये सति परिक्लेशे वरं क्लेशो विमुक्तये ॥ ७-११९॥

स्वर्गापवर्गयोरेकं यः शीघ्रं न प्रसाधयेत् ।
याति तेनैव देहेन स मृतस्तप्यते चिरम् ॥ ७-१२०॥

यदवश्यं पराधीनैस्त्यजनीयं शरीरकम् ।
कस्मात्तेन विमूढात्मा न साधयति शाश्वतम् ॥ ७-१२१॥

यौवनस्था गृहस्थाश्च प्रासादस्थाश्च ये नृपाः ।
सर्व एव विशीर्यन्ते शुष्कस्निग्धान्नभोजनाः ॥ ७-१२२॥

अनेकदोषदुष्टस्य देहस्यैको महान्गुणह् ।
यां यामवस्थामाप्नोति तां तामेवानुवर्तते ॥ ७-१२३॥

मन्दं परिहरन्कर्म स्वदेहमनुपालयेत् ।
वर्षासु जीर्णकटवत्तिष्ठन्नप्यवसीदति ॥ ७-१२४॥

न ते ऽत्र देहिनः सन्ति ये तिष्ठन्ति सुनिश्चलाः ।
सर्वे कुर्वन्ति कर्माणि विकृशाः पूर्वकर्मभिः ॥ ७-१२५॥

तुल्ये सत्यपि कर्तव्ये वरं कर्म कृतं परम् ।
यः कृत्वा न पुनः कुर्यान्नानाकर्म शुभाशुभम् ॥ ७-१२६॥

तस्मादन्तर्बहिश्चिन्तामनेकाकारसंस्थिताम् ।
संत्यज्यात्महितार्थाय स्वाध्यायध्यानमभ्यसेत् ॥ ७-१२७॥

विविक्ते विजने रम्ये पुष्पाश्रमविभूषिते ।
स्थानं कृत्वा शिवस्थाने ध्यायेच्छान्तं परं शिवम् ॥ ७-१२८॥

ये ऽतिरम्याण्यरण्यानि सुजलानि शिवानि तु ।
विहायाभिरता ग्रामे प्रायस्ते दैवमोहिताः ॥ ७-१२९॥

विवेकिनः प्रशान्तस्य यत्सुखं ध्यायतः शिवम् ।
न तत्सुखं महेन्द्रस्य ब्रह्मणः केशवस्य वा ॥ ७-१३०॥

इति नामामृतं दिव्यं महाकालादवाप्तवान् ।
विस्तरेणानुपूर्वाच्च ऋष्यात्रेयः(?) सुनिश्चितम् ॥ ७-१३१॥

प्रज्ञामथा विनिर्मथ्य(?) शिवज्ञानमहोदधिम् ।
ऋष्यात्रेयः समुद्धृत्य प्राहेदमणुमात्रकम् ॥ ७-१३२॥

शिवधर्मे महाशास्त्रे शिवधर्मस्य चोत्तरे ।
यदनुक्तं भवेत्किंचित्तदत्र परिकीर्तितम् ॥ ७-१३३॥

त्रिदैवत्यमिदं शास्त्रं मुनीन्द्रात्रेयभाषितम् ।
तिर्यङ्मनुजदेवानां सर्वेषां च विमुक्तिदम् ॥ ७-१३४॥

नन्दिस्कन्दमहाकालास्त्रयो देवाः प्रकीर्तिताः ।
चन्द्रात्रेयस्तथात्रिश्च ऋष्यात्रेयो मुनित्रयम् ॥ ७-१३५॥

एतैर्महात्मबिः प्रोक्ताः शिवधर्माः समासतः ।
सर्वलोकोपकारार्थं नमस्तेभ्यः सदा नमः ॥ ७-१३६॥

तेषां शिष्यप्रशिष्यैश्च शिवधर्मप्रवक्तृभिः ।
व्याप्तं ज्ञानसरः शार्वं विकचैरिव पङ्कजैः ॥ ७-१३७॥

ये श्रावयन्ति सततं शिवधर्मं शिवार्थिनाम् ।
ते रुद्रास्ते मुनीन्द्राश्च ते नमस्याः स्वभक्तितः ॥ ७-१३८॥

ये समुत्थाय शृण्वन्ति शिवधर्मं दिने दिने ।

ते रुद्रा रुद्रलोकेशा न ते प्रकृतिमानुषाः ॥ ७-१३९॥

शिवोपनिषदं ह्येतदध्यायैः सप्तभिः स्मृतम् ।
ऋष्यात्रेयसगोत्रेण मुनिना हितकाम्यया ॥ ७-१४०॥

॥ इति शिवोपनिषदि शिवाचाराध्यायः सप्तमः ॥

॥ इति शिवोपनिषत्समाप्ता ॥